# निदान सूत्र

## अथ निदानसूत्रम्

### अथ प्रथमः प्रपाठकः

अथातश्छन्दसां विचयं व्याख्यास्यामः ।
त्रयश्छन्दःपादा भवन्ति ।
अष्टाक्षर एकादशाक्षरो द्वादशाक्षर इति ।
तन्मिश्रं दशाक्षरः ।
अष्टाक्षर आपञ्चाक्षरतायाः प्रतिक्रामति ।
१ २ ३ २
विश्वेषाꣳ हितः इति ।
आचतुरक्षरतायां इत्येके ।
आदशाक्षरताया अभिक्रामति ।
व॒यं तद॑स्य॒ सं॑भृ॑तं॒ वसु इति ।
एकादशाक्षर आनवाक्षरतायाः प्रतिक्रामति ।
यदि॑ वा द॒धे यदि॑ वा॒ न इति ।
आष्टाक्षरताया इत्येके ।
आपञ्चदशाक्षरताया अभिक्रामति ।
३ १ २र ३ १ २ ३ १ २ ३ १ २
सत्रा दधानमप्रतिष्कुतꣳ श्रवाꣳसि भूरि इति ।
द्वादशाक्षर आनवाक्षरतायाः प्रतिक्रामति ।
३ २उ ३ १ २ ३
अनूपे गोमान्गोभिरक्षाः इति ।
आष्टाक्षरताया इत्येके ।
आषोडशाक्षरताया अभिक्रामति विकर्षेण ।
२ ३ १ २ ३ २उ ३ २ ३
त्वं वृत्राणि हꣳस्यप्रतीन्येक इत्पुरु इति ।
आष्टादशाक्षरताया इत्येके ।
१ २ ३ १ २ ३ २ ३ २ ३ २ ३ २
अर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिं कविम् इति ।
अथातो वृत्तिप्रदेशः ।
यत्र ह्रस्वमक्षरमुपोत्तमं पादस्य भवति सा जागती वृत्तिः ।
यत्र दीर्घꣳ सा त्रैष्टुभी ।
ह्रस्वाक्षरस्योपरिष्टाद् व्यञ्जनसन्निपातेऽपि गौरवम् ।

अष्टाक्षरद्वादशाक्षरौ लघुवृत्ती दशाक्षरैकादशाक्षरौ गुरुवृत्ती ।
एतैः खलु छन्दाँसि वर्तन्ते ।
पथ्यान्येवाग्रे सप्त चतुरुत्तराणि छन्दाँसि व्याख्यास्यामः १
चतुर्विँशत्यक्षरा गायत्री त्रिपदाऽष्टाक्षरपादा ।
अथापि चतुष्पदा भवति षडक्षरपादा ।
तच्चापि पाञ्चाला उदाहरन्ति--
पेटिलालकन्ते पेटाविटकन्ते ।
तत्र ककुबद्धस्तज्जग्धि परेहि ॥ इति ।
अष्टाविँशत्यक्षरोष्णिक् त्रिपदैव पूर्वावष्टाक्षरावुत्तमो द्वादशाक्षरः ।
अथ यत्र मध्ये द्वादशाक्षरः सा ककुप् ।
यत्र प्रथमः सा पुरउष्णिक् ।
अथापि चत्वारः सप्ताक्षरा इत्युदाहरन्ति ।
३ २ ३ १ २
नदं व ओदतीनाम् इति ।
द्वात्रिँशदक्षराऽनुष्टुप् चतुष्पदाऽष्टाक्षरपादा ।
अथापि त्रिपदा भवति मध्येऽष्टाक्षरोऽभितो द्वादशाक्षरौ ।
तां पिपीलिकामध्येत्याचक्षते ।
मध्येज्योतिरिति बह्वृचाः ।
एष पादो यतोयतः परिक्रामेत् तज्ज्योतिषमेनां ब्रुवते ।
पुरस्ताज्ज्योतिर्मध्येज्योतिरुपरिष्टाज्ज्योतिरिति ।
षट्त्रिँशदक्षरा बृहती चतुष्पदैव त्रयोऽष्टाक्षरा उपोत्तमो द्वादशाक्षरः ।
तां पथ्येत्याचक्षते ।
अपि च स्कन्धोग्रीवीति ।
अथ यत्र प्रथमो द्वादशाक्षरः सा पुरस्ताद्बृहती ।
यत्र द्वितीयः सोरोबृहती ।
सैव न्यङ्कुसारिणी ।
यत्रोत्तमः सोपरिष्टाद्बृहती ।
अथापि चत्वारो नवाक्षरा इत्युदाहरन्ति ।
उपे॒द॑मुप॒पर्च॑नम् इति ।

अथापि त्रिपदा भवति द्वादशाक्षरपादा ।

३ २ ३ १ २ ३ २उ ३क २र
प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम् इति ।

ताँ सतोबृहतीत्याचक्षते ।

बार्हतमपि तृचँ सतोबृहत्य इत्येवाचक्षते । यथा--

३ १ २ ३ १ २ ३
वयं घ त्वा सुतावन्तः इति २

चत्वारिँशदक्षरा पङ्क्तिः पञ्चपदाऽष्टाक्षरपादा ।

अथापि चतुष्पदा भवति द्वादशाक्षरोऽष्टाक्षर इति व्यत्यासम् ।

ताँ सिद्धाविष्टारपङ्क्तिरित्याचक्षते ।

विपर्यासे विपरीता सैव ।

अथ यत्र पूर्वावष्टाक्षरावुत्तरौ द्वादशाक्षरौ साऽऽस्तारपङ्क्तिः ।

आस्तीर्णाविवैतौ पङ्क्तिपादाविति ।

अथ यत्र पूर्वौ द्वादशाक्षरावुत्तरावष्टाक्षरौ सा प्रस्तारपङ्क्तिः ।

प्रस्तीर्णाविवैतौ पङ्क्तिपादाविति ।

अथ यत्र मध्येऽष्टाक्षरावभितो द्वादशाक्षरौ सा सँस्तारपङ्क्तिः ।

सँस्तीर्णाविवैतौ पङ्क्तिपादाविति ।

अथ यत्र मध्ये द्वादशाक्षरावभितोऽष्टाक्षरौ सा विष्टारपङ्क्तिः ।

विष्टब्धाविवैतौ पङ्क्तिपादाविति ।

तद्यत्र सिद्धाविष्टारपङ्क्तिर्बृहत्या वा ककुभो वोत्तरा भवति तां प्रगाथ इत्याचक्षते ।

आनुष्टुभा अपि प्रगाथा भवन्तीत्येके ।

अनुष्टुप् प्रथमा गायत्र्यावुत्तरे ।

यथा--

३ १ २ ३ १ २
पुरोजिती वो अन्धसः ।

२ ३ २ ३ २ ३ १ २
आ त्वा रथं यथोतये ।

३ १ २ ३ १ २
विशोविशो वो अतिथिम् ।

२ ३ २ ३ १ २ ३
पान्तमा वो अन्धसः इति ।

अथाक्षरपङ्क्त्यो विँशत्यक्षराः चतुष्पदाः पञ्चाक्षरपादाः ।
द्विपदा एना एके प्रतिजानते ।
पञ्चँशत्यक्षरापि भवति पञ्चपदा पञ्चाक्षरपादा ।
तां पदपङ्क्तिरित्याचक्षते ३
चतुश्चत्वारिँशदक्षरा त्रिष्टुप् चतुष्पदैकादशाक्षर पादा ।
अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षते ।
पञ्चपदाऽपि भवति चत्वारोऽष्टाक्षरा एको द्वादशाक्षरः ।
अष्टाचत्वारिँशदक्षरा जगती चतुष्पदैव द्वादशाक्षरपादा ।
अथ यत्रोत्तमोऽष्टाक्षरस्तां ज्योतिष्मतीत्याचक्षते ।
पञ्चपदाऽपि भवति त्रयोऽष्टाक्षरा द्वौ द्वादशाक्षरौ ।
स एष समास आष्टपदतायाः क्रमते ।
सैषैवँ सती विष्टारपङ्क्तिः प्रवृद्धपदा ।
षट्पदाऽपि भवति अष्टाक्षरपादा ।
३ १ २र ३ १ २
उभे यदिन्द्र रोदसी इति ।
एतानि खलु सप्त चतुरुत्तराणि छन्दाँसि व्याख्यातानि ।
प्रथमं प्रथमं चैवात्र न्यायं पथ्यं विद्यात् ।
एतासामेव द्विपदा भवन्ति ।
यत्र द्वावष्टाक्षरौ सा गायत्र्याः ।
यत्र द्वादशाक्षराष्टाक्षरौ सा विष्टारपङ्क्तेः ।
यत्रैकादशाक्षरौ सा त्रिष्टुभः ।
यत्र द्वादशाक्षरौ सा जगत्याः ।
विषमपदाः --
२ ३ २
शं पदम्
२ ३ १ २
प्र व इन्द्राय
१ २ ३
विश्वस्य
३ २उ ३
इमा नु कम् इति ।
नवाक्षरचतुर्दशाक्षरावेकादशाक्षरत्रयोदशाक्षरौ

षडक्षरदशाक्षरावेकादशाक्षराष्टाक्षरौ ।
दशाक्षरपादा विराज एकपदाप्रभृतयः आचतुष्पादाभ्यः ।
एकादशाक्षरपादा अपि त्रिपदा विराज इत्येवाचक्षते ।
यथा--
३ २उ ३
अग्निं नरः इति
यथा
३ २उ ३
अग्निं नरः इति ४

इति छन्दोविचितौ निदाने प्रथमः पटलः

ऊर्ध्वं जगत्या अतिच्छन्दसः ।
द्विपञ्चाशदक्षरप्रभृतयः चतुरुत्तरौ द्वौ सप्तवर्गौ चतुश्शताक्षराऽऽसां पराध्या ।
तासां नामधेयानि--
विधृतिः शक्वर्यष्टिरत्यष्टिर्मँहना सरित् सम्पेति पूर्वस्य ।
सिन्धुः सलिलमम्भो गगनमर्णव आपस्समुद्र इत्युत्तरस्य ।
तान्येतानि सर्वाणि कृतच्छन्दाँसि भवन्ति ।
अथ प्राञ्चि गायत्र्याः पञ्च कृतच्छन्दाँसि ।
कृतिश्चतुरक्षरा ।
प्रकृतिरष्टाक्षरा ।
सँकृतिर्द्वादशाक्षरा ।
अभिकृतिः षोडशाक्षरा ।
आकृतिर्विँशत्यक्षरा ।
एतासामन्तरेष्वन्तस्थाच्छन्दाँसि ।
द्वाविँशत्यक्षरप्रभृतयश्चतुरुत्तरास्त्रयः सप्तवर्गाः द्विशताक्षराऽऽसां पराध्या ।
तासां नामधेयानि--
राट् सम्राड् विराट् खराट् स्ववशिनी परमेष्ठाऽन्तस्थेति प्रथमस्य ।
प्रत्नं चामृतं च वृषा च जीवं च तृप्तं च रसश्च शुक्रमित्युत्तरस्य ।
अर्णश्चांशश्चाम्भश्चाम्बु च वार्याप उदकमित्युत्तमस्य ।
तान्येतानि सर्वाणि द्वापरच्छन्दाँसि भवन्ति ।

अथ प्राञ्चि द्वाविँशत्यक्षरतायाः पञ्चान्तस्थाच्छन्दाँसि द्व्यक्षरप्रभृतीनि चतुरुत्तराण्यारोहीणि ।
हर्षीका शर्षीका सर्षीका सर्वमात्रा विराट्कामेति ५
अथ निचृद्भुरिजः ।
या एकेनाक्षरेणोनास्ता निचृतः ।
या एकेन ज्यायस्यस्ता भुरिजः ।
तान्येतानि सर्वाणि त्रेताकलिच्छन्दाँसि भवन्ति ।
तद्यत् त्रेतास्थानं ता निचृतः ।
अथ यत् कलिस्थानं ता भुरिजः ।
चतुष्टयेन छन्दो जिज्ञासेत पदैरक्षरैर्वृत्त्या स्थानेनेति ।
तेषामेकैकस्मिन् दुष्यति शेषेणैव जिज्ञासेत ।
न दुष्टस्य छन्दसोऽन्येन वृत्तेर्ज्ञानमस्तीति विद्यात् ।
अथ देवासुरच्छन्दाँसि ।
एकाक्षरप्रभृतीन्येकोत्तराण्यारोहीणि देवच्छन्दाँसि ।
सप्ताक्षरा जगती अष्टाक्षराऽतिच्छन्दाः ।
पञ्चदशाक्षरप्रभृतीन्येकावाञ्चि प्रत्यवरोहीण्यसुरच्छन्दाँसि ।
नवाक्षरा जगती अष्टाक्षराऽतिच्छन्दाः ।
अथ प्रजापतेश्छन्दाँसि--
अष्टाक्षरप्रभृतीनि चतुरुत्तराण्यारोहीणि ।
द्वात्रिँशदक्षरा जगती षट्त्रिँशदक्षराऽतिच्छन्दाः ।
तेषां त्रयं त्रयँ समेत्यैकैकमृषिच्छन्दो भवति ।
तदेष श्लोकः--
काश्चित् स्त्रियो द्व्यक्षरमेकविँशतिस्सप्त भूत्वानु भवन्ति कर्मभिः ।
पञ्चाशतः पञ्च नपुँसकानां द्वे चाधिके बिभ्रति त्रयक्षराणाम् ॥
देवासुराणां छन्दोभिरात्मनश्च प्रजापतिः ।
सप्तवर्गं चकारैकमृषीणां यज्ञवोढवे ॥
यस्य कस्यचिच्छन्दसः सम्पदं कश्चिदिच्छति ।
चतुर्थं तस्य सङ्ख्याय तावतीराहरेदृचः ॥

यदि तच्छन्द आहरेदन्यदन्यस्य सम्पदे ।
चतुर्थं तस्य सङ्ख्याय विद्यात्तास्तावतीर्ऋचः ६
अथावसानानि ।
एकपदाद्विपदानामन्ततोऽवसानम् ।
त्रिपदाप्रभृतीनां द्वावुक्त्वा शेषमाह--
आषट्पदाभ्यो भवति ।
तत्र त्रिपदानामन्ततोऽवसानम् ।
दुहीयन् मित्रधितये इति ।
यथा चतुष्पदायां त्रिषु ।
१ २ ३ २
आ नो वयोवयःशयम् इति ।
तथा पञ्चपदायाम् ।
यन्मे यमम् इति ।
अथापि चतुर्षु ।
२ ३ २ ३
अग्ने तमद्य इति ।
अथापि द्वौ द्वावथैकम् ।
अभि न इळा यूथस्य माता इति ।
अथापि द्वावुक्त्वाऽथैकमथ द्वौ ।
२ ३ १ २र १ ३
तव त्यन्नर्यं नृतः इति ।
षट्पदायां द्वयोर्द्वयोरवसानम् ।
३ १ २र ३ १ ३
उभे यदिन्द्र रोदसी इति ।
अथापि त्रिषु ।
अपि वृश्च पुराणवत् इति ।
सप्तपदायां त्रीनुक्त्वा द्वौ द्वौ परान् ।
३ १ २र ३ १ २ ३
अग्निँ होतारं मन्ये दास्वन्तम् इति ।
अथापि द्वौ द्वावथ त्रीन् ।
१ २ ३ १
प्रो ष्वस्मै पुरोरथम् इति ।

अष्टपदाप्रभृतीनां प्रज्ञातमवसानं विद्यते ।
तत्र मध्य एव पदस्य नावस्येत् ।
अर्थाभिप्रापणान्नयूनीभावोऽर्थाभिप्रापणादतिरेकः ।
अथ यत्रैतदक्षरमागच्छति नामिति वामिति वा तदुतोनीकरोति ।
एकाक्षरभाविनो वा सन्धयः ।
तदप्येतौ श्लोकौ भवतः--
चत्वारि सन्धिजातानि यैश्छन्दो ह्रसते नच ।
प्रश्लिष्टमभिनिहितं क्षिप्रसन्धिरभिध्रुवम् ॥
एतानि सन्धिजातानि मिमानश्छन्दसोऽक्षरैः ।
द्वैधं कुर्यादसम्पूर्णे सम्पूर्णे किञ्चनेङ्गयेत् ॥ इति ।
छन्दसां विचयं जानन् यः शरीराद्विमुच्यते ।
छन्दसामेति सालोक्यमानन्त्यायाश्नुते श्रियम् ॥ इति ।
श्रियमिति ७

इति निदाने द्वितीयः पटलः

अथातः स्तोमान् व्याख्यास्यामः ।
ते द्वया भवन्ति ।
युग्मन्तश्चायुजश्च ।
तेषां विवेकः ।
एकिप्रभृतयो द्व्युत्तरा अयुजः ।
द्विकप्रभृतयो द्व्युत्तरा युग्मन्तः ।
उभये सन्तो द्वया भवन्ति--समा विषमाश्च ।
यस्त्रैधं व्यूह्यमानः समाः पर्याया भवन्ति स समः ।
अतोऽन्ये विषमाः ।
विषमा द्वया भवन्ति--एकाधिशयाश्च द्व्यधिशयाश्च ।
य एकया समतामतिक्रामति स एकाधिशयः ।
यो द्वाभ्याँ स द्व्यधिशयः ।
त्रिकप्रभृतयः षडुत्तराः समाः ।

तेषां पर्यायकृतिः ।
त्रयः पर्यायाः ।
पर्यायास्त्रिविष्टावाः ।
प्रथमे पर्याये प्रथमा तृचभागा तामेव पर्यायभागेत्याचक्षते ।
मध्यमाऽऽवापः ।
उत्तमा परिचरा ।
मध्यमे पर्याये प्रथमा परिचरा मध्यमा तृचभागा उत्तमाऽऽवापः ।
उत्तमे पर्याये प्रथमाऽऽवापः मध्यमा परिचरा उत्तमा तृचभागा ।
सैषा विष्टावकृतिः ।
एकाधिशयप्रभृतिषु साधिष्ठमुपपद्यते ।
एकिप्रभृतयः षडुत्तरा एकाधिशयाः ।
तेषां पर्यायकृतिः ।
समपर्यायैर्विषमा वर्तन्ते ।
पर्याया हि ते भवन्ति ।
यावभितः समावयुजौ तयोः पर्यायान् सँहरेत् ।
पूर्वस्यैकम् उत्तरस्य द्वाविति ।
युग्मतां च द्व्यधिशयानां युग्मायुक्पर्यायाणाम् ।
सतामेष न्यायः ।
अथ पूर्वस्य द्वौ उत्तरस्यैकमिति ।
यथा युग्मतां द्व्यधिशयानां युक्पर्यायाणाम् एवमयुजामेव द्व्यधिशयानां युग्मायुक्पर्यायाणाम् ।
पञ्चिप्रभृतयः षडुत्तरा द्व्यधिशयाः ।
तेषां पर्यायकृतिः ।
समपर्यायैर्विषमा वर्तन्ते ।
पर्याया हि त्रे भवन्ति ।
यावभितः समावयुजौ तयोः पर्यायान् सँहरेत् ।
पूर्वस्य द्वौ उत्तरस्यैकमिति ।
युग्मतां चैकाधिशयानां युग्मायुक्पर्यायाणाम् ।

पूर्वस्यैकम् उत्तरस्य द्वाविति ।
यथा युग्मतामेकाधिशयानां युक्पर्यायाणाम् एवमयुजां द्व्यधिशयानां युग्मायुक्पर्यायाणामित्ययुजः ८
अथ युग्मन्तः ।
द्विकप्रभृतयः षडुत्तरा द्व्यधिशयाः ।
चतुष्कप्रभृतयः षडुत्तरा एकाधिशयाः ।
षट्कप्रभृतयः षडुत्तराः समाः ।
तेषां पर्यायकृतिर्व्याख्याता ।
अथ द्वयानां विवेकः ।
एकिप्रभृतयश्चतुरुत्तराः कलिस्तोमाः ।
त्रिकप्रभृतयश्चतुरुत्तरास्त्रेतास्तोमाः ।
द्विकप्रभृतयश्चतुरुत्तरा द्वापरस्तोमाः ।
चतुष्कप्रभृतयश्चतुरुत्तराः कृतस्तोमाः ।
अथोभयेषु समविषमाणां विवेकः ।
एकिप्रभृतयो द्वादशोत्तरा एकाधिशयाः कलिस्तोमाः ।
पञ्चिप्रभृतयो द्वादशोत्तरा द्व्यधिशयाः कलिस्तोमाः ।
नवकप्रभृतयो द्वादशोत्तराः समाः कलिस्तोमाः ।
त्रिकप्रभृतयो द्वादशोत्तराः समास्त्रेतास्तोमाः ।
सप्तिप्रभृतयो द्वादशोत्तरा एकाधिशयास्त्रेतास्तोमाः ।
एकादशिप्रभृतयो द्वादशोत्तरा द्व्यधिशयास्त्रेतास्तोमाः ।
द्विकप्रभृतयो द्वादशोत्तरा द्व्यधिशया द्वापरस्तोमाः ।
षट्कप्रभृतयो द्वादशोत्तराः समा द्वापरस्तोमाः ।
दशिप्रभृतयो द्वादशोत्तरा एकाशिया द्वापरस्तोमाः ।
चतुष्कप्रभृतयो द्वादशोत्तरा एकाधिशयाः कृतस्तोमाः ।
अष्टिप्रभृतयो द्वादशोत्तरा द्व्यधिशयाः कृतस्तोमाः ।
द्वादशिप्रभृतयो द्वादशोत्तराः समाः कृतस्तोमाः ।
अथोभयेषां तज्जातीयविवेकः ।
एकिप्रभृतयस्त्र्युत्तरा उभयेषामेकाधिशयाः ।

द्विकप्रभृतयस्त्र्युत्तरा उभयेषां द्व्यधिशयाः ।
त्रिकप्रभृतयस्त्र्युत्तरा उभयेषाँ समाः ।
व्यत्यासं वर्तन्ते ६
अथ कतमे सप्तच्छन्दसाँ स्तोमा इति ।
त्रिवृत्पञ्चदशः सप्तदश एकविँशस्त्रिणवस्त्रयस्त्रिँश इति ।
अथ खल्वाह--सानुष्टुप् चतुरुत्तराणि छन्दाँस्यसृजत । षडुत्तरान्
स्तोमान् सप्तदशः इति ।
सप्तदशात् त्रिकमुद्धृत्य पुरस्तात् त्रिवृतो निदध्यात् ।
चतुर्दशातिशिष्यन्ते ताः पञ्चविँश उपदध्यात् ।
एवमेतान् षडुत्तरान् ब्रुवते ।
अथ कतमे भागस्तोमा इति ।
त्रिवृत्पञ्चदशः सप्तदश एकविँश इति ।
त्रिवृतः पथ्यायां विवदन्ते ।
उद्यतिं पथ्यां मन्य इति गौतमः ।
सा हि पथ्यास्थाने तिष्ठतीति ।
परिवर्त्तिनीमिति धानञ्जय्यः ।
एषा विष्टुती न्यायतरेण कृता भवतीति ।
अथापि अवर्षुकस्तु पर्जन्यो भवति इति ।
उद्यत्यां निन्दामवादीदिति ।
अथ यत्र सँह्रियमाणाः पर्याया यथास्थानं भवन्ति
तामविदुष्टपर्यायेत्याचक्षते ।
अथ यत्राऽयथास्थानं तां विदुष्टपर्यायेति ।
अथ यत्र समा आद्यन्ताः पर्यायाणां भवन्ति ताँ समात्समेत्याचक्षते ।
अथ यत्र प्रत्यवरोहिणस्तां भस्त्रान्याय इत्याचक्षते ।
प्रत्यवरूढपर्यायेति च ।
अथ यत्र सँस्तुतस्य स्तोमस्य भूयिष्ठभाग् भवति तां
ब्रह्मायतनीयेत्याचक्षते ।
अथ यत्र मध्यमा तां क्षत्रायतनीयेति च गर्भिणीति च ।

अथ यत्रोत्तमा तां विडायतनीयेति ।
स खलु पर्यायान् सँहरन् भस्त्रान्यायं विडायतनीयान्तप्रथमां पर्यायविदोषमिति च वर्जयन् समात्समामेव चिकीर्षेत् १०
अथातो विधिशेषान् व्याख्यास्यामः ।
अनौपवसथ्येऽहनि समामनेरन् ।
वागाप्यायिता प्रयुज्येतेति ।
अथैताः कुशा उपकल्पयेत औदुम्बरीर्वा पालाशीर्वा यो वान्यो यज्ञियो वृक्षः ।
प्रादेशमात्रीः कुशपृष्ठास्त्वक्तः समा मज्ञतोऽङ्गुष्ठपर्वपृथुमात्रीः प्रज्ञाताग्राः कारयित्वा गन्धैः प्रलिप्य सर्पिषा सत्त्रेषु खादिरीस्तु दीर्घसत्त्रेषु वैष्टुतेन वसनेन परिवेष्टयौदुम्बरीमध्या वासयेत् क्षौमँ शाणं कार्पासमिति वसनविकल्पाः ।
औदुम्बरीमुद्धृत्य विसृजेत् ।
आच्छदिषो व्यूहनाच्छ्वोभूत एनामूर्ध्वाग्रैः कुशैर्वेष्टयित्वैवंजातीयेनैवोद्धूर्वदशेन वसनेन प्रदक्षिणं परिवेष्ट्य च स्पृष्टोऽनपश्रित उद्गायेत् । इति गौतमः ।
धिष्ण्योऽयं भवति न धिष्ण्यमासादयेदिति ।
धृष्टमपश्रयेत इति धानञ्जय्यः ।
श्रयणार्थेयं भवतीति ।
सा यदौदुम्बरी मङ्गलायैवोर्गुक्ता ।
उदकसेवी बहुपलाशो नातीवाफलो भवतीति ।
प्राक्समासं वोदक्समासं वोपरिष्टाद्दशमास्तीर्य प्रस्तोता विष्टुतीर्विदध्यात् ।
उदगग्राभिः प्रथमं विष्टावं प्राक्सँस्थम् ।
प्रत्यक्सँस्थमित्येके ।
पश्चात् प्रथमस्य विष्टावस्य प्रागग्रमभिरुदक्सँस्थं द्वितीयम् ।
प्रत्यगग्राभिरित्येके ।
पश्चादेवं मध्यस्य विष्टावस्योदगग्राभिः प्रत्यक्सँस्थं तृतीयम् ।
एतयावृता पर्यायान् विदध्याद् ।

दक्षिणार्ध्यं प्रथममनुपूर्वमुदीचः सँहतान् विष्टावपर्यायान् विदध्यात् ।
इतरेतरेण शिरसि कुशा न विधीयेरन्नित्येके ।
पराक्त्वादावर्त्यङ्गभावात्तु विधीयेरन् ।
एतेन सन्धिरुक्तः ।
त्रिवृत उद्यत्या विधाने विप्रतिपद्यन्ते ।
यथैकः पर्याय इत्येके ।
तृचभागास्थानेषु पर्यायाणां पर्यायाः स्युरित्येके ।
एतेनैवंजातीया व्याख्याताः व्याख्याताः ११

इति तृतीयः पटलः

अथातः सामान्तानां चत्वारो भागसामान्ताः ।
स्वरो निधनमिडा वाक् ।
तद्यानि स्वराण्याग्नेयानि तानि गायत्रतया वायव्यानि वा ।
यानि निधनवन्त्यैन्द्राणि तानि त्रैष्टुभतया ।
यान्यैडानि वैश्वदेवानि तानि जागततया ।
यानि वाङ्निधनानि प्राजापत्यानि तान्यानुष्टुभतया ।
अत्र खल्वस्य सर्वस्य छन्दसो निधनार्षेयमुक्तं भवति ।
अथेमौ स्वरौ सन्तौ निधनेषु समाम्नायेत ईकारोकारौ ।
कस्य हेतोरिति ।
यान्यन्यानि स्वराण्यसिद्धोपायानि तानि भवन्ति ।
ऋच एव तेषामध्यन्ववस्वरणं भवति ।
अथेमौ सिद्धोपायौ भवतः--वागुपायाविति ।
अथोप्येनौ निधनस्थानेषु युज्येते ।
स्वरैश्च सन्निपततः ।
निधनवादश्चैनयोर्भवति ।
तं वैराजस्य निधने नादृँहन् इति ।
अथाप्येनौ वाक्यविलोपावाहुः ।
इहेति वेदमिति वा सतो विलुप्त ईकारः ।

ऊर्ध्वमिति वोपरीति वा सतो विलुप्त ऊकारः ।
तावप्यनुनासिकौ ब्रुवते वाक्यविलोपत्वादेव ।
तद् यत्र यत्रैते सामान्ता भवन्ति स्वरो निधनमिडेति तदेनान् प्रक्लृप्ता इत्याचक्षते ।
अथ यत्र समानसामान्ते सन्निपततस्तज्जामीत्याचक्षते ।
अथ यत्र समानपृष्ठे अहनी समानभक्तिनी वा तत्खलु नानात्वप्रक्रान्तेष्वेवाजामि भवति ।
अथ यत्र यत्र समानमभ्यस्यते साम वाऽहर्वा जाम्येव तद्भवति ।
सामान्यान्न सामान्तैर्नानाहःसु जामि भवति १२
अथैतान्यन्तरेण व्यवयन्त्यजाभिकरणानि भवन्ति ।
सोमो वषट्कारः शस्त्रमवयवः ।
अथ यत्रान्तरेण सामानि क्रियन्ते यथातिच्छन्दसं परिमाद इति तत्तत्र ।
अथ यत्रैकमावर्तिस्थानं नानासामानि समवयन्ति यथावृत एकसाम्नः स्थानमिति तत्तत्र ।
अथ यत्र सामान्ता व्यत्यस्यन्ते यथा विश्वजिति तत्तत्र ।
अथ यत्र समानसामान्ते सन्निपततो मध्ये निधनेन तत्र ।
यत्रो मध्ये निधनेनान्ते पृथगिति तत्तत्र ।
यत्रो न विद्यतेऽर्थः सन्निपतति तदर्थो जामिकरण इति तत्तत्र ।
सर्वत्र रथन्तरसन्निपाते जामि भवति तथा बृहत्सन्निपाते ।
तत्रैतान्यजामिकरणानि ।
सौभरं प्रत्नवत्यो बृहदिति ।
एषोऽभिव्याहारो वार्कजम्भं बृहन्निधनं बृहन्निधनानीत्याह--
रथन्तरसन्निपातेषु कण्वरथन्तरमभिभवन्ति रथन्तरणिधनानि बृहत्सन्निपातेषु ।
एतावता खल्वजामिकल्पँ समन्वीक्षेत ।
तदस्ति स्वित् साम्नश्छन्दो देवता ३ नास्तीति ।
नास्तीति धानञ्जय्यः ।
किँ स्वरस्य छन्दो भविष्यति का देवता ।

मिताक्षरो भवतीति ।
अस्तीति गौतमः ।
यच्छन्दस्कायामृचि गीयते तदस्य छन्दः ।
यद्देवत्यायाँ सास्य देवता ।
तद्विजानीमो यत् स्वयोन्यसममुत्तरयोर्विकारं भवति ।
अथाप्याह--ऐन्द्र्य ऋच ऐन्द्रँ साम इति १३

अथ द्वितीयः प्रपाठकः

ऋषिकृतः स्विदूहा ३ अनृषिकृता इति ।
अनृषिकृता इति वै खल्वाहुः ।
अप्याद्या विरता एवोहनात् ।
नो एवमार्षेयो भवति ।
अथाप्यूह इत्येनमाचक्षते ।
कर्तव्य इति वैतद्भवति ।
अथापि याज्ञिका विप्रतिपद्यन्ते ।
यज्ञार्थः खलु पुनरूहो भवति ।
अथापि वृत्तिर्योनिरिति गायन्ति ।
किमु खलु स्मृतौ वृत्त्या किं योन्या भविष्यतीति ।
अथापि नात्यन्तं गायन्ति ।
तत्र यदगीतं कर्तव्यमित्येवापन्नं भवति ।
अथाप्यन्यसँहितस्य सँहितामवेक्ष्य गायन्ति ।
तदेतत् स्मृतौ नोपपद्यत इति ।
ऋषिकृत इत्यपरम् ।
कथमेवं बह्वनार्षं यज्ञे क्रियेत ।
अथापि बृहदुत्तरयोर्नाभिपश्यामीति भरद्वाजः ।
तपोऽतप्यत रथन्तरमुत्तरयोरिति वसिष्ठः ।
विद्यमानस्यैवोहस्याभिवादो भवति ।
अथाप्येते वासिष्ठं भारद्वाजमित्याचक्षते ।

अथाप्याचार्यस्मृतीनां वक्ता तमतिशङ्कमानः सर्वत्रैवाशङ्केत ।
अथापि यो विप्रतिषेधादस्मृतं मन्येत अपि नूनँ स सर्वमेवापि यज्ञमस्मृतं मन्येत ।
यज्ञे ह्यपि विप्रतिषेधा भवन्तीति ।
यद्वेतदप्याद्या विरता एवोहनादिति अगीतोहास्ते भवन्ति ।
अप्रमाणमु खल्वनधीयानः ।
यद्वेतदूह इत्येनमाचक्षत इति भवन्त्ययथार्थं नामधेयानि ।
यद्वेतद्याज्ञिका विप्रतिपद्यन्त इति आचार्यकल्पेऽपि याज्ञिका विप्रतिपद्यन्ते।
स एव विस्मृतः स्यात् ।
ब्राह्मणविप्रतिपत्त्या च यज्ञमप्यस्मृतं मन्येत ।
यद्वेतद्वृत्तिर्योनिरिति गायन्तीति छान्दसस्य पार्थिका वृत्तिर्योनि कल्पन्ते ।
भवन्ति चापेत्य वृत्तियोनिभ्यामाचार्यगीतानि ।
यथा पार्थलौशशार्गाणि ।
यद्वेतन्नात्यन्तं गायन्तीति कल्पा अप्यनत्यन्ता भवन्ति ।
यथाऽऽवापवानेकाहाः श्रीस्तोमा उत्तरा ततिरनुब्राह्मणिनामिति ।
यद्वेतदन्यसँहितस्य सँहितामवेक्ष्य गायन्तीति छन्दस्यपि वृत्तिज्ञोऽन्यसँहितस्य सँहितामवेक्ष्य गायेत् न तावता छन्दोऽस्मृतं मन्येत ।
अथापि य उपवादादस्मृतं मन्येत अपि नूनँ स सर्वामेवापि त्रयीविद्यामस्मृतां मन्येत ताँ ह्यप्येक उपवदन्तीति १
एकर्चदृष्टीनि स्वित् सामानि ३ तृचदृष्टीनीति ।
एकर्चदृष्टीनीति शाण्डिल्यायनः ।
तद्विजानीमः ।
छान्दसेनाध्यायेनैकर्चान् भूयिष्ठाँ छन्दस्यधीमहे ।
अथापि नो यज्ञ उपदृष्टिः प्राह--यदत्र धृष्णोत्येकर्चान् कर्तुम् ।
अथाप्येकर्चैः स्तोमान् सम्मिमते ।
एकर्चान् वयमधीमहे ।
नाध्वर्युर्बह्वृचा वा उत्तरेऽभिजानन्तीति ।

तृचदृष्टीनीति धानञ्जय्यः ।
तद्विजानीमः ।
छान्दसेनैवाध्यायेनैकर्चानधीत्य तृचमुत्तममधीमहे ।
निदर्शनार्थो वै स ह भवति ।
एवमेवातः प्रागिति ।
अथापि नो यज्ञ एवोपदृष्टिः प्राह--कामायैवात्रैकर्चान् करोति ।
अथापि न ऋचा स्तोत्रीयाणि प्राहुः ।
द्वितीयायां वा तत् तृतीयायां वर्चि लक्षणं भवति ।
यदार्षेयं तत् साम भवति ।
यथाऽऽकूपारमैषिरं पौरुहन्मनमिति ।
अथापि छिन्नमिव वा एतद्यदेकर्चाः इति ब्राह्मणवादः परिचष्टे ।
अथापि जनुषैकर्चौ नामाधीमहे तृचदृष्टित्वादेव ।
अथाप्यधुनैव दैववाजेयस्तृचापन्नं छन्दोऽनुजगौ ।
उच्चावचदृष्टीनीति शाण्डिल्यः ।
अप्यनृचि यथा दैवतानि ।
अप्येकार्धे यथा सामोपेतानि ।
अप्येकस्याम् यथा भूयिष्ठानि ।
अपि द्वयोः यथातीषङ्गाः ।
अपि तिसृषु यथा सन्तनीनि ।
अपि चतसृषु यथेलान्दम् ।
अपि भूयसीषु यथा पुरुषव्रतं कश्यपव्रतमादित्यव्रतमिति ।
अपित्वेतान्येके सामसूक्तानीत्याचक्षत इत्याचक्षत इति २

इति चतुर्थः पटलः

अथ द्वयानि सामानीति प्रतिदिशन्ति ।
यान्यपुरस्तात्स्तोभानि पदनिधनानि लघुगीतीनि तानि राथन्तराणि ।
यानि पुरस्तात्स्तोभानि बहिर्निधनानि गुरुगीतीनि तानि बार्हतानि ।
अथान्यतरतो राथन्तराणि चान्यतरतो बार्हतानि च ।

अपुरस्तात्स्तोभानि च बहिर्निधनानि च ।
पुरस्तात्स्तोभानि च पदनिधनानि ।
अथोभयतो बार्हतानि च ।
अथोभयतो राथन्तराणि चोभयतो बार्हतानि ।
अपुरस्तात्स्तोभानि पदनिधनानि गुरुगीतीनि
पुरस्तात्स्तोभानि बहिर्निधनानि लघुगीतीनीति ।
गीत्यैतानि विजिज्ञासेतेति शाण्डिल्यायनः ।
यानि लघुगीतीनि तानि राथन्तराणि ।
यानि गुरुगीतीनि तानि बार्हतानि ।
अपि वा यानि प्रणयस्तगीतीनि तानि राथन्तराणि ।
यान्युदात्तगीतीनि तानि बार्हतानीति ।
कल्पेनैव यज्ञकामा व्याख्याताः ।
यथैतत् स्वर्गकामयज्ञः पशुकामयज्ञः प्रजापतिकामयज्ञोऽभिचरणीय इति ।
अथाप्याहुः--ऊर्ध्वार्थ एव खल्वयं भवति ।
तं नु खल्वर्थं श्रेम्णोऽन्येऽर्था अन्ववयन्तीति ।
आप्तकामाः स्विद्देवाः स्तूयन्ता३ अनाप्तकामा इति ।
अनाप्तकामा इति वै खल्वाहुः ।
को ह्याप्तकामस्य स्तुत्वा कः प्रत्यर्थो भवतीति ।
अथाप्याहुः--शश्वदङ्गाप्तकामा एव भवन्ति ।
तत्प्रवादेन जानीमः ।
यस्मै देवा कामयन्ते तस्मै समर्धयन्ति ।
कुतोऽनाप्तकामाः समर्धयिष्यन्तीति ।
अथापीहैवं पश्याम आप्तकामतराणामेवानाप्तकामैरिप्साम् ।
यथैतद्राज्ञामिति ।
अथाप्यल्पकामवदायाह--विश्वेभ्यो देवेभ्यः स्वाहा इति ।
कुतोऽनाप्तकामान् प्रतिव्यभविष्यदिति ।
अथाप्याहुः--द्विस्थाना देवा भवन्ति ।
न्यूनमन्यत्स्थानं सम्पूर्णमन्यत् ।

यदु ह न्यूनं तदिह प्रवैः प्रतिविभवन्ति ।
यदु सम्पूर्णं तत आशिषः समर्धयन्तीति ३
कथं खल्वङ्गकामा इति ।
विद्यन्त इत्येके ।
श्रुतिप्रमाणाः ।
अङ्गे श्रूयमाणं कथं क्रतौ प्रतीयामेति ।
अथापि योऽङ्गकामं क्रतुकामं मन्येतापि नूनँ सोऽङ्गे दुष्टे सर्वमेवापि क्रतुं दुष्टं मन्येत ।
अथापि पृष्ठहोमँ सर्वेषां स्तोत्राणां मन्येतेति ।
क्रतुकाम इत्यपरम् ।
क्रतुः खल्वधिकृतोऽङ्गैश्च कामैश्च भवति ।
अथापि न आर्षेयकल्पो दर्शयति--यज्जातीया प्रतिपद्भवति तज्जातीयानि द्रव्याणि कल्पयति ।
यथा ज्योगामयाविनो वर्षकामस्य जन्या गा विवित्समानस्येति ।
अथापि योऽङ्गे कामं मन्येतापि नूनँ स तदेवाङ्गं कृत्वा विरमेत् तस्मिन् हि सकामो भवतीति ।
यद्वेतदङ्गदोषात् क्रतुदोष इति विषये खलु दोषो भवति न तथाकामः ।
यद्वेतत्पृष्ठहोमँ सर्वेषाँ स्तोत्राणां मन्येतेति भवन्ति वाङ्गधर्मा यथा युग्यस्य घासदानमक्षस्योपाञ्जनमिति ।
सम्भूय तु खल्वर्थान् साधयन्तीति ।
कथमु ब्रह्मसाम्नि कामागानमिति ।
याथाकामी कामानामित्येक आहुः ।
अनादेशे किमन्यद्याथाकाम्यात् प्रतीयामः ।
अथापि रहस्यब्राह्मणं दर्शयति--याथाकामीति याथाकामानामिति ।
क्रतुकाम इत्यपरम् ।
एषोऽधिकृतः ।
अथापि यः क्रतुकामेऽधिकृते सत्यन्यं काममुत्पादयेदपि नूनँ स पशुना तृतीयसवने चरन्तीत्यन्यं पशुमुत्पादयेत् ।

ओमिति सति समयादपेयात् ।
यद्युपैतमेव प्रतीयाद्यः प्रातःसवने सदृशं व्याहन्यात् ।
यद्वेतदनादेश इ ति आदेशजातिरेषा भवति यदधिकारः ।
यद्वेतद्रहस्यब्राह्मणं दर्शयतीति सर्वाभिप्राय एतदुपपद्यते ।
कथमु खल्वाशीःसमृद्धिरुपसरणानीति ।
सर्वस्तोत्रेष्वित्येक आहुः ।
स्तोत्रशब्देन चाभिश्रावयति ।
अपि चानिर्देशे किमर्थोऽवयवं प्रतीयादिति ।
ब्रह्मसाम्नीत्यपरम् ।
ब्रह्मसाम ह्याशीःस्थानमिति ।
अथापि यः स्तोत्रशब्दान्नाऽस्तोत्रीये प्रतीयादाशीश्शब्दादपि स
नाऽब्रह्मसाम्नि प्रत्येतुमर्हतीति ४
अथातो यज्ञस्थानानि ।
अपिच सन्धियज्ञा इत्याचक्षते ।
अहोरात्राभीज्याऽग्निहोत्रम् ।
सायमाहुत्या रात्रिमभियजते ।
सा यत्र क्व च पुरोदयाद्धूयते स्वे स्थाने जुहोमीति विद्यात् ।
प्रातराहुत्याऽहः ।
सा यत्र क्व च पुराऽस्तमयाद्धूयते स्वे स्थाने जुहोमीति विद्यात् ।
ते तु यदादौ निदधाति प्राप्तश्च होमकालः ।
अपिचैवं कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्या ।
दर्शपूर्णमासौ ।
पौर्णमासेन हविषाऽपरपक्षमभियजते ।
स यत्र क्व च पुराऽमावास्याया यजेत स्वे स्थाने यज इति विद्यात् ।
आमावास्येन पूर्वपक्षम् ।
स यत्र क्व च पुरा पौर्णमास्या यजेत स्व स्थाने यज इति विद्यात् ।
तौ तु यदादौ निदधाति प्राप्तश्च यज्ञकालः ।
अपिचैवं कृत्स्नौ पक्षावभीष्टौ भवत इति ऋत्वभीज्या ।

चातुर्मास्यान्योषधिभक्त्यभीज्या ।
आग्रयणेष्टी उदगयनदक्षिणायनयोः पशुसोमः तस्य संवत्सरस्याभीज्या सुत्येति ।
तत्खल्वेतत् सकृत्प्रयुक्तमाहिताग्नेः कुशलेन यदग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी पशुसोम इति तु यदेवं न करोति ह्यवयज्या स्यादिति ।
अननुभूतिजꣳ स्यादिति ।
असिद्धिदर्शी वा स्यात् ।
मूलिपुरोडाशेनाप्नोति ।
आज्येन पयसा च प्राणिति ।
अथाप्याहुः--आदित्यश्च वाव खलु चन्द्रमाश्चेमानि पर्वाणि कुरुतो ययोरियमभीज्या भवतीति ।
अग्निहोत्रेणादित्यस्येज्यामभियजते ।
दर्शपूर्णमासाभ्यां चन्द्रमसः ।
तदग्निहोत्रꣳ सायमाहुत्या प्रयुज्यते प्रातराहुत्या निस्तिष्ठते ।
सोऽपि नाहुत्वा प्रातराहुतिमन्यं यज्ञमुपक्रमते ।
कथं पूर्वस्मिन्न नितिष्ठतेऽन्यमुपक्रामेतेति ।
पौर्णमासेन हविषा दर्शपूर्णमासौ प्रयुज्येते ।
आमावास्येन निस्तिष्ठेत ।
सोऽपि नानिष्ट्वाऽऽमावास्येन हविषाऽन्यं यज्ञमुपक्रमते ।
कथं पूर्वस्मिन्न नितिष्ठतेऽन्यमुपक्रामेतेति ५
तदप्यपरपक्षे प्रायणं परिजिहीर्षितं भवति ।
रात्रौ वा ।
यज्ञविलोपो विसꣳस्थिते ।
अपि च नोह तमस एव तम इयादिति ।
तच्चेदपरपक्षे प्रायणꣳ शङ्केत ।
यावत्योऽपरपक्षस्यातिशिष्टा रात्रयः स्युस्तासाꣳ सायं प्रातराहुतीः प्रति-सङ्ख्याय हुत्वा प्रत्याहृत्याऽऽमावास्येन हविषेष्ट्वा समापयेयुः ।

एवमयज्ञविलोप इति ।
पूर्वपक्षे चेद् रात्रौ प्रातराहुतिमेव ।
पुरस्तादाहवनीँ हरेयुः ।
पश्चाद् गार्हपत्यम् ।
दक्षिणतो दक्षिणाग्निम् ।
मध्ये शरीरम् ।
तं दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पयेत् ।
अध्वर्युः शिरसि कपालानि युञ्ज्यात् ।
समवत्तधानं च चमसम् ।
ललाटे प्राशित्रहरणम् ।
नासिकयोः स्रुवौ कर्णयोर्वा ।
आस्ये हिरण्यमवधायाऽनुस्तरणिक्या गोर्वपया मुखं प्रच्छाद्य
तत्राग्निहोत्रहवणीं तिरश्चीम् ।
दक्षिणे पाणौ जुहूम् ।
सव्य उपभृतम् ।
पार्श्वयोः स्फ्योपवेषौ ।
तथा वृक्यौ यथास्वम् ।
उरसि ध्रुवाम् ।
उदरे पात्रीम् ।
उपस्थे कृष्णाजिनम् ।
अन्तरेण सक्थिनी शम्यां दृषदुपले यच्च नादेक्ष्यामः ।
दक्षिणस्योखस्य दक्षिणत उलूखलम् ।
अनुसक्थि मुसलम् ।
पादयोः शकटशूर्पे ।
सर्वाण्युत्तानान्यासेचनवन्ति पृषदाज्येन पूरयित्वा ।
अथैनं यथास्थानं युगपदग्निभिरुपसृजेत् ।
सर्वस्वारिकं परिगाणम् ।
स एष यज्ञायुधी यजमानः स्वर्गलोकमेति इति ब्राह्मणं भवति ।

आहुतिं जुहोति पुत्रो भ्राता यो वान्यो यज्ञियो ब्राह्मणः--
तस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहा ॥ इति ।
शान्तिर्वामदेव्यम् ६

इति पञ्चमः पटलः

एकहिङ्कारं बहिष्पवमानँ साम्नश्चैकत्वात् ।
छन्दसश्चेत्याचार्याः ।
साम्नामनु नानात्वम् ।
उत्तरयोः पवमानयोः पृथग्घिङ्कारा भवन्ति ।
पर्यायाणामनु नानात्वम् ।
आवर्तिषु सन्धौ विप्रतिपद्यन्ते ।
एकहिङ्कार इत्येके ।
यथा बहिष्पवमानं त्रिराचार्या हिङ्कुर्वन्ति ।
देवतानामनु नानात्वम् ।
विश्वजितोऽपि वा नानादेवतं बहिष्पवमानम् ।
अथाप्यत्र सकृद्धिङ्करोति सकृद्धिङ्कतोत्पादत्वाद्
बहिष्पवमानस्येत्याचार्याः ।
अथ यज्ञायज्ञीयानुरूपे कथँ हिङ्कार इति ।
यथोत्तरयोः पवमानयोरित्येके ।
अस्ति हि सामनानात्वम् ।
यथा वा विश्वजिति नानादेवत इति ।
सकृद्धिङ्करोति सकृद्धिङ्कतोत्पादत्वाद्बहिष्पवमानस्य तथा वा स्यादिति ।
अथ योनौ यज्ञं तन्वानस्य कथं रेतस्यारथन्तरवर्णे स्यातामिति ।
उभे यथास्थानँ स्यातामिति ।
बहिष्पवमाने चोत्पन्ने भवतः ।
न चापि निर्वर्तयति ।
अथापि यथा गायत्रं यज्ञायज्ञीयधर्मान् प्रतिपद्यते एवमपि यज्ञायज्ञीयं

गायत्रधर्मान् प्रतिपद्येत ।
बहिष्पवमान एष धर्मो भवतीत्यपरम् ।
नान्यत्र गायत्रान्न चान्यत्र बहिष्पवमानादिति ७
अथ गायत्रस्य काम्याः सामान्ताः ।
यावन्निगदँ स्युरित्येके ।
स्वरस्यैते प्रत्याम्नाया भवन्ति ।
तत्र किमर्थोऽवयवं प्रतीयादिति ।
अथाप्येवमव्याहतं गायत्रं भवति ।
अथापि यथा काम्यस्याविप्रयोगस्तत्कुशलम् ।
अथाप्येष प्रयोगाणां धर्मो येन प्रक्रमस्तेन समाप्तिरिति ।
बहिष्पवमान इत्यपरम् ।
एतद्गायत्रस्य विकारस्थानम् ।
अथाप्येतद् धुराँ सामान्ता नातियन्ति ।
अथाप्येवमजामि भवति ।
अथाप्येवं यथाभूयिष्ठं भवतीति ।
प्रथमायामिति वार्षगण्यः ।
एतद्बहिष्पवमानस्याशीःस्थानम् ।
अत्र हि काम्याः प्रतिषदो भवन्तीति ।
रथन्तरवर्णायामित्यपरम् ।
एषा च विकृततमा ।
अपि च पथ्यप्रक्रमं पथ्यावसानं भविष्यतीति ।
ब्रह्मण आज्य इत्यपरम् ।
ब्रह्मसाम ह्याशीःस्थानमिति ।
उत्तरयोः पवमानयोरित्यपरम् ।
एतदेतेषाँ सामान्तानाँ स्थानम् ।
अथाप्येवँ रोहो भवति ।
अपि चान्ताख्यानि कर्माणीति ।
यद्येतज्जामीत्यजामि वा कल्पयेत अर्थोऽजामिकरण इति वापि तितिक्षेत ।

अनृच्येके गायत्रं गायन्ति ।
कस्य हेतोरिति ।
स्वरायैतत्स्थानं कुर्वते ।
स न इत्थं केवलः स्वरो गीतो भविष्यतीति ।
ते व्याध्मत्यृचि प्रस्तुत्यानृचि गायन्ति ।
प्रतिहारस्य चानुत्सादमनुपायाच्च निधनस्य
चानिधनस्वरितत्वान्निधनमुत्सीदेदित्याचार्याः ८
अथ बृहद्रथन्तरयोर्वदति ।
तयोः समानं निधनमासीत् ।
तस्मिन्नातिष्ठेतामिति ।
किन्निधनमिति ।
अहरिति कौत्सः ।
अकारमेवान्यत् ।
सकारोपसृष्टं मेजे ।
हकारमन्यत् ।
सकारोपसृष्टं सकारमेव अहमनयोः समानं निधनं मन्य इति धानञ्जय्यः ।
स ह्युभयत्र दृश्यत इति ।
निधनब्राह्मणमेवाहमिदं मन्य इति वार्षगएयः ।
द्वे खल्विमे पृष्ठे भवतः ।
एकं पृष्ठस्थानं तस्मिन्न स्पर्धेतामहंपूर्वतया इति ।
अथैतेषु पुरस्ताज्जपेषु वेति ।
एतदुदस्येदित्येक आहुः ।
एतानि मनसान्वीच्द्योद्गायेदिति हि भवतीति ।
अन्यदिदं तेभ्यो भवतीति ।
यथाधीतमित्याचार्याः ।
न चोदासो विज्ञायते ।
अपि चार्थस्यादूषकम् ।
अथापि सँशयेऽलोपो लोपान्न्यायतर इति ।

ते कथं पवमानगतयोरिति ।
कर्तव्या इत्येके ।
सामसंयुक्ता हि भवन्ति ।
अकर्तव्या इत्यपरम् ।
स्थानसंयुक्ता हि भवन्ति ।
अथापि पवमानसामनी अप्रधानभूते भवत इति ।
अथापि यद्युहैनान् पुरस्तात् स्तोत्रादकरिष्यद्व्यपेता अन्यैः
सामभिरभविष्यन् यद्वनन्तरान् स्तोत्रव्यपायोऽभविष्यत् ।
एतेन वामदेव्ययज्ञायज्ञीये व्याख्याते ।
बृहतः स्तोत्रोत्तमायां ब्राह्मणोक्तानां रोहाणामुत्तमं न रुह्यात् इत्याचार्याः ।
अप्रथमायैवँ ह्याह--बृहतो रोहा वृणीमहा मादायिषु वान्तौ पूर्वौ वृद्धौ
निधनोपाये च द्वितीयमक्षरं वर्धयेत् स तृतीयः ।
तदुपरिष्टात् स्तोत्रस्य प्रत्यवरोहे देवं हि स्म युवानमृत्विजमनूचानं
प्रेतमाहुः--एनमप्रत्यवरूढं परावधीदिति ६
अथ यज्ञायज्ञीयस्योत्तरयोर्द्व्यक्षरेण प्रस्तौति ।
यथा बृहद्रथनतरयोः ।
तदपि शश्वद्ब्राह्मणं भवति--
तानि ह वैतानि द्वादशाक्षरप्रस्तावानि ककुबुत्तराणि सामानि बृहद्रथन्तरे
यज्ञायज्ञीयञ्चेति ।
अथ खल्वाह यदग्निष्टोमयाज्यनृतमाह तदन्वस्य यज्ञः स्रवति
अक्षरेणान्ततः प्रतिष्ठाप्यम् इति ।
किमनृतं किमक्षरमिति ।
वेत्येतदक्षरम् ।
वकारादिराकारो गकारान्त इत्येक आहुः ।
तस्य गकारलोपं ब्राह्मणं क्षिपतीति तदर्पितमुपेयुः ।
एवं कृत्स्नेन अक्षरेण यज्ञस्य छिद्रमपि दधाति इति ।
आर्चिकमेवैतदक्षरमित्यपरम् ।
एतस्मिन् ह्यक्षरशब्दात् प्रतियन्ति ।

अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति ।
द्व्यक्षरेणोत्तरयोश्चतुरक्षरेण बृहतः प्रतिहरतीति ।
न स्तौभिकैः सहोपपद्यते ।
तस्माद्यदेवान्त्यमक्षरं तन्निधनमुपेयुः ।
यथाधीतमित्याचार्याः ।
स्वरतन्त्राण्यक्षराणि भवन्ति स्वरान्ततामेवाक्षरस्यैप्सद्
ब्राह्मणमेवमवक्ष्यदिति ।
अथापि बहुलैषा छान्दसी वृत्तिः ।
वाङ्निधनानीति चैतान्याचक्षते वागुपायानीति च ।
यद्वेतदार्चिकमक्षरमिति यथाधिकारमेतद् भवति स्तौभिकस्येहाधिकारो
विज्ञायते ।
अथापि सँशये प्रकृतिसविधमेव प्रत्येतव्यमिति प्रत्येतव्यमिति १०

इति षष्ठः पटलः

अथ द्रव्यसमुद्देशः ।
राथन्तराणि रथन्तरपृष्ठेऽभिरूपाणी बार्हतानि बृहत्पृष्ठे
उभयविधान्युभयसाम्नि ।
द्रवदिडानि रथन्तरपृष्ठे ऊर्ध्वेडानि बृहत्पृष्ठे ।
अथ यत्र रथन्तरपृष्ठे बार्हतानि क्रियेरन् बृहदीप्सया तानि विद्यात् ।
एवमेव बृहत्पृष्ठे राथन्तराणि स्वयोनीनि सर्वत्राभिरूपतराणि ।
अस्वयोनिभ्यः सामान्या ऋचाम् असामान्याभ्यश्छन्दसि प्रथमाः
सामान्या इत्याचक्षते ।
अथ या यज्ञप्रवादाः क्रतुप्रवादाः स्तोमप्रवादाः सर्वत्र ता अभिरूपाः ।
शुक्रवत्योऽप्रवादाः पूर्वयोः पवमानयोः ।
होतृप्रवादँ हविष्प्रवादँ समिद्धवद्धोतुराज्यम् ।
हूतवन्ति पीतवन्ति तृप्तवन्त्युत्तराणि ।
मरुत्वत्योन्नप्रवादाः कृतवत्यो माध्यन्दिनीयाः ।
परिवत्यः कोशवत्यो निषण्णवत्यो माध्यन्दिनीयाः ।

गायत्र्यां वा तत् त्रिष्टुभि वा मरुत्वच्चिकीर्षितं भवति ।
अथ खल्वाह--त्रीणि सवनानां छिदाणि तानि तेनापिधीयन्ते इति ।
कतमानि छिद्राणीति ।
पवमाना अदेवतास्तुतयः तानि छिद्राणीति ।
अथाप्यन्तरेण पवमानांश्चावर्त्तीनि च हविर्भिः प्रचरन्ति तानि छिद्राणीति ।
वामदेव्यं मैत्रावरुणसाम सर्वत्राभिरूपम् तदपचारे तल्लिङ्गीयांश्चिकीर्षेत् ।
अथैतानि तार्तीयसवनिकानि रूपाणि ।
स्वादुमत्यो मधुमत्यो मद्वत्य ओजस्वत्यो विश्ववत्यश्चित्रवत्यः सूर्यवत्यो दक्षिणवत्यो निहूतवच्च वृद्धवच्चोक्थेषु ।
अथ नार्मेधस्तोत्रीये वदति--ककुप् प्रथमाथोष्णिगथ पुरउष्णिगनुष्टुप् इति ।
ककुबेव प्रथमा उष्णिग्द्वितीया पुरउष्णिक् तृतीया दाशतयेनाध्यायेन तां बह्वृचा अधीयते--युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे ।
इन्द्रवाहा वचोयुजा ॥ इति ।
तत्र वयं चत्वार्यक्षरान्युपाहरामः स्वर्विदा इति ।
सानुष्टुब् भवति उपरिष्टाज्ज्योतिः ११
कथमु षोडशी ज्योतिष्टोम इति ।
अकर्तव्य इति शौचिवृक्षिः ।
अन्तरितो ब्राह्मणसमाम्नायेन तथा ऋक्समाम्नायेनेति ।
कर्तव्य इति गौतमः ।
षोडशिनः स्तोत्रे देयेति भवतीति ।
अथापि न आर्षेयकल्पो दर्शयति--द्वादशाहस्य षोडशिमन्तावत्तिरात्रौ इति ।
अथापि मन्त्रवर्णो भवति--त्रीणि ज्योतीँषि सचते स षोडशी इति ।
त्रिरुपेतो द्वादशाहो भवतीति वैतद् भवति ।
सँस्थामप्यस्यैतां विद्यमानाममन्यत इति गौतमः ।
एवं च रहस्यब्राह्मणे दर्शयति--अप्यनेन षोडशिसँस्थेन यजेतेति ।
नोहास्यैषा सँस्था विद्यत इति शाण्डिल्यः ।

अतिरात्रे तु कृताकृतो भवति ।
एवमिवाध्वर्युब्राह्मणं भवति--नोथ्ये ग्राह्यो नातिरात्रे ग्राह्य इति ।
सन्धी इमौ भवत इति धानञ्जय्यः ।
उदयसन्धिरसावस्तमयसन्धिरयम् ।
तस्माद्यः कश्चातिरात्रः षोडशिमानेव स कुशलेनेति ।
तस्यैता ऋचः पञ्चविँशत्यक्षराः पञ्चपदाः पञ्चाक्षरपादाः ।
नवोपसर्गाक्षराणि आदितस्त्रयाणां पादानां त्रीणि त्रीण्युपसर्गाक्षराणि
पादान्तेषु भवन्ति ।
तेऽष्टाक्षराः सम्पद्यन्ते ।
पञ्चाक्षरावुत्तरौ दशाक्षरोपयुक्ताश्चतुस्त्रिँशदक्षराः सम्पद्यन्ते ।
अन्तस्थास्तदुपसृष्टाः ।
केनो विद्यामेति ।
इत्थँ ह्येव वयमधीमहे ।
तथा बृह्वृचा इति ब्राह्मणेनेत्याहुः--चतुस्त्रिँशदक्षराः सँस्तुतो भवति
इति ।
अनुपसृष्टः कनीयानिति वैतद्भवति ।
अथाप्युद्ध्रियमाणेषूपसर्गाक्षरेषु नैवार्थो हीयते न वृत्तिर्दुष्यति ।
अथापि शश्वदेना अनुपसृष्टा आथर्वणिका अधीयते ।
अथापि निर्धारितानामुपसर्गाक्षराणां वदति ।
अथवा एता एकपदाष्ट्र्यक्षरा विष्णोश्छन्दो भुरिजः शक्वर्यः इति ।
त्र्यक्षराण्यपि भुरिजो भवन्तीति ।
त्रैतद्गौरीवितं गायत्रीसाम आनुष्टुभम् रात्र्या समानभागः समानभक्षो
भवतीति ।
स यद् गौरीवितं गौरीवित्य इमा ऋचः स्वयोनिं कुर्वते ।
ऋषिः स्वयोनिर्भविष्यतीति ।
एतेन सौभरनार्मेधे व्याख्याते रेवती च वारवन्तीयम् १२
ज्योतिष्टोमात्पादमेके षोडशिनं ब्रुवते ।
तत्र चास्य ब्राह्मणमधीयते ।

अथापि कथमेवं कृत्स्नं कर्माकृतमन्तरयिष्यदिति ।
चतुर्थोत्पादं वयं तत्र चास्य ब्राह्मणमधीमहे ।
अथाप्याह--एकविँशायतनो वा एव यत् षोडशीति ।
तदेकविँशमहर्भवति ।
अथाप्याह--दाशतय्य ऋचश्चतुरुत्तरच्छन्दः क्रमे वा एवंविधमुत्पद्यते न प्रथमकृताविति ।
अह्नो भवती३ रात्रेरिति ।
अह्नो भवतीत्याहुः ।
अभुज्यं चास्य हविर्भवति ।
अथापि नियुक्तधर्मा भवति ।
विद्वाञ्छिल्पवान् ग्रहवान् ।
यथाहरेवं रात्रेरित्यपरम् ।
रात्र्या समानभागः समानभक्तो भवतीति ।
तौ खल्विमौ द्वौ सन्धी भवतः ।
तयोरसौ नित्यः कृताकृतोऽयम् ।
कस्य हेतोरिति ।
सार्द्धं तेन रात्रिः पञ्चदशविधतां लभते ।
कृतं पञ्चदशविधमहरिति ।
अथापि न तमुद्धृत्य पराक् स्तोत्रँ रात्रावलप्स्यत ।
कृतान्यत्रावर्तीनि ।
अथापि न तमुद्धृत्य तद्देवत्यं स्तोत्रँ रात्रावलप्स्यत ।
कृतान्यत्रैन्द्राणि ।
अथापि विद्यते तस्य कालस्य स्तुतिर्नास्य विद्यते ।
कस्मात्तस्य न विद्यते ।
पराङेतस्यां वेलायामादित्यो भवति नो परा च स्तुतिर्विद्यते ।
उदाहरन्ति द्वे च परां च स्तुतिम् ।
हिरण्यस्तूपे भवति--
अस्थाद् देवः प्रतिदोषं गृणानः इति ।

अथ खल्वाह--शक्वरीषु षोडशिना स्तुवीत इति ।
तत्रैके महानाम्नीः प्रतियन्ति ।
एताः शक्वर्यो भवन्तीति ।
एतास्वेव शक्वरीप्रवादो भवतीत्यपरम् ।
एताश्चाधिकृता भवन्तीति ।
ओङ्कारो विशेषश्रुतेः सर्वसामसु स्यादित्येके ।
स वाचा रथन्तरे निवर्तेत ।
यथा त्रयस्त्रिँशं तृतीयसवनमिति ।
अभिपरीत्य प्रत्यपकर्षस्तादृशमेतद् भवतीति ।
समुच्चयो वानन्यार्थत्वात् ।
प्रस्तावशान्त्यर्था हि वाक् ।
उद्गीथादिशान्त्यर्थ ओङ्कारः ।
वाक्पूर्वा सामान्यात् ।
एवं यथान्तरप्रत्यासत्तिः ।
उत्तरा वाक् सामान्यविधेराचाराच्च १३

अथ तृतीयः प्रपाठकः

अथ का प्रथमा सँस्थेति ।
आग्निष्टोमीं प्रथमां मन्य इति शाण्डिल्यः ।
प्रथमं ह्येव स्थानं भवति ।
अथापि प्रथममधीमहे ।
अथाप्यणुप्रमुखानि भूतानि भवन्त्यपरोवरीयाँसि ।
अथाप्याह--यज्ञमुखं वा अग्निष्टोमः इति ।
अथाप्येतया सँस्थया चरति ।
अथाप्येषा समारब्धतमा ह भवतीति ।
अथापि नाग्निष्टोममकृत्वापरे सँस्थे करोति ।
नह्यनुपादाय प्रथमामुत्तरयोः सिद्धिरस्ति ।
अनुपादायोत्तरे प्रथमा सिध्यतीति ।

अथाप्याह--प्रजापतिर्वा एषा सँस्थानां यदग्निष्टोमः ।
तां यदकृत्वाथान्यां कुर्यात् प्रजापतिरस्य हिँसितः स्यादिति ।
यावदादेशमुत्तरे सर्वत्र ।
अथाप्यूर्ध्वानामेव सँस्थानां कृतानां वदति--
देवा वा अग्निष्टोममभिजित्योक्थानि नाशक्नुवन्नभिजेतुम् इति ।
अथापि नैतद्देवताः प्राहू राका सिनीवाली सरस्वती विष्णुरिति ।
सौविष्टकृतं खल्वेतत् सोमस्य स्थानं यदाग्निमारुतम् ।
योऽयं देवताः शँसन् सोऽप्यतिरात्रे सतीहैव प्रत्याहृत्य
शँसतीत्युक्थ्या ।
तां प्रथमां मन्य इति गौतमः ।
एवमाप्ताहर्मात्रासमानि सवनानि अभ्युद्ध्रियन्ते ।
आर्भवच्छन्दाँसि अनुविधीयन्ते ।
प्रस्थितयाज्या ग्रहैश्च शस्त्रैश्च ।
अप्यहमेनमागूर्त्तिनमिव मन्ये योऽग्निष्टोमयाजीति ।
ध्रुवमनु द्वादशस्तोत्रात्पूर्वं तत्प्रस्थितयाज्याभिर्विजानीम इति १
अतिरात्रीं प्रथमां मन्य इति धानञ्जय्यः ।
कृत्स्नं पूर्वं कर्म परिपादया इति ।
अथापि स मिमीते ।
एषा वाग्निष्टोमस्य सम्मा यद्रात्रिः ।
एषा वा उक्थस्य सम्मा यद्रात्रिः । इति ।
कुतो दृष्टेन प्रमा स्यादिति ।
अथापि नः स्तोमसमाम्नायः ।
प्राह--अतिरात्रस्यैव स्तोमसमाम्नायो भवति ।
अथापि न उक्थसमाम्नायः ।म्
प्राह--अतिरात्रस्यैव प्रथममुक्थानि समामनामः ।
अथापि नः कर्मणो यजूँषि प्राहुः--
उपरि सन्धिभक्षात् स्तोमविमोचनमधीमहे ।
यन्नूनमन्या प्रथमा सँस्थाऽभविष्यत् प्राक्तनं स्तोमविमोचनं

समाम्नास्यदिति ।
अथापि शश्वद्बह्वृचा अतिरात्रीमेव प्रथमामधीयते ।
तासां का काम्या का सर्वाभिप्रायेति ।
आग्निष्टोमीं चातिरात्रीं च ब्रुवते शौचिवृक्षाः ।
सर्वाभिप्रायेऽनवधारितकामे भवत इति ।
एकस्मा अन्यो यज्ञः कामायाह्रियते सर्वेभ्योऽग्निष्टोम इति न
काममवधारयति ।
ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेतेति नैव काममवधारयति ।
पशुकाम उक्थेन स्तुवीत इति काममवधारयतीति ।
सोऽशिथिला परिसँस्थिता भवतीति ।
सर्वाः सर्वाभिप्रायाः ।
सर्वासु काम्यानि विद्यन्त इति शाण्डिल्यः ।
तथा गौतमधानञ्जय्यौ ।
सर्वाभिप्रायः खल्वयं ज्योतिष्टोमः ।
सर्वाभिरेव सँस्थाभिः सर्वाभिप्रायो भवतीति यद्वेतदवधारितकामेति
पश्यामो वै वयँ सर्वाभिप्रायेषु काममवधार्यमाणम् ।
यथोपवती ग्रामकामस्य प्रतिष्ठाकामस्य रथन्तरँ सन्धिषामेति रथन्तरँ
सन्धिषामेति २

इति सप्तमः पटलः

तस्य खल्वस्य ज्योतिष्टोमस्य षड् व्यञ्जनस्थानानि भवन्ति--
प्रतिपद् गायत्रणिधनं विष्टुतिर्ब्रह्मसामोक्थप्रणयः सन्धिषामेति ।
तेषां किं काम्यं किँ सर्वाभिप्रायमिति ।
यद्यत् खल्वस्य ज्योतिष्टोमस्य चरति तत्तत्सर्वाभिप्रायम् ।
अथ यत्कामं निवर्तते तत्काम्यम् ।
प्रतिपत् सर्वाभिप्राया ।
सर्वा ह्यवधारितकामा भवन्तीति ।
उपवतीत्याहुः ।

प्रथमामन्वेनामधीमहे ।
अपि चैनां ग्रामकामस्याह--ग्रामः सर्वाभिप्रायो भवतीति ।
अथाप्यस्याचारं दर्शयति--
ततश्चतुर्षु मासेषु शुनासीर्यस्य लोके ज्योतिष्टोमोऽग्निष्टोम उपवती प्रतिपदिति ।
एषा रथन्तरपृष्ठेऽग्रियवती बृहत्पृष्ठेऽग्रियवद् बार्हतं रूपमुपवद्राथन्तरमुपवती रथन्तरेऽग्रियवती बृहतीति च भाल्लविनाम् ।
अथाप्येनाँ साहस्रोत्तमे स्तोत्रीयस्योत्तमां दर्शयति--
औभयसाम्यात् तां न प्रथमाम् ।
ब्राह्मणेनैव तद् व्याख्यातम् ।
अथाप्याहाभिषेचनीये--
यत् पवस्व वाचो अग्रियः इति
तेन यज्ञमुखान्न यन्ति । इति ।
प्रकृत्यापश्रयं दर्शयति ।
तदपि शश्वद् ब्राह्मणं भवति--
एते वाव प्रतिपदौ सर्वाभिप्राये यदुपवती चाग्रियवती च ।
कामाय वा इतरा आह्रियन्त इति ।
स्वरो गायत्रणिधनानां प्रथमा विष्टुतीनाँ श्यैतनौधसे ब्रह्मसाम्नाम् ।
षडुक्थानि सर्वाभिप्रायाणि भवन्ति ।
साकमश्वँ सौभरनार्मेधे हारिवर्णोद्वँशीये आष्टादँष्ट्रमिति ।
तषां कान्युक्थे कान्यतिरात्र इति ।
सर्वेषां याथाकामीति शाण्डिल्यः ।
हारिवर्णोद्वँशीये वा हारिवर्णाष्टादँष्ट्रे वोक्थान्ते कुर्यादिति गौतमः ।
अतिरात्रे सौभरनार्मेधे ।
तच्चर्या जानीमः ।
हारिवर्णोद्वँशीये वा हारिवर्णाष्टादँष्ट्रे वोक्थान्ते चैव कुर्यादिति ।
अतिरात्रे चेति धानञ्जय्यः ।
सौभरनार्मेधे त्वेवोक्थान्ते न कुर्यादिति ।

रथन्तरँ सन्धिषाम्णाँ सर्वाभिप्रायम् ।
तद्धि चरति ।
तत्र यानि कामावधारणानि सर्वाभिप्रायेषु तानि भवन्ति ।
तानि खल्वेतानि व्यञ्जनान्येकजातीयान्येव समादध्यात् ।
एवं चाव्याहतः क्रतुर्भवति ।
अपि चैवमार्षेयकल्पो दर्शयति ३
अथानुष्टुभस्य भागस्य का छन्दोभक्तिरिति ।
एकाक्षरां ब्रुवते शौचिवृक्षाः ।
तद्विजानीमः ।
बहुरक्षरप्रवादो भवति ।
एकाक्षरा वै वाक् ।
अक्षरेणान्ततः प्रतिष्ठाप्यमक्षरम् ।
त्र्यक्षरमुच्छिष्यत इति हि भवतीति ।
सर्वैव द्वात्रिँशदक्षरेति शाण्डिल्यः ।
तथा गौतमधानञ्जय्यौ ।
एतामनुष्टुबित्याचक्षते ।
अथाप्येनामनुष्टुबर्थे पश्यामः ।
अथापि यस्तावदकुशलं छन्दसामौक्थिकामनुष्टुभं पृच्छेदेतामेव
द्वात्रिँशदक्षरामाचक्षीत ।
तत्खलु गायत्रं प्रातःसवनं त्रैष्टुभं माध्यन्दिनं जागतं तृतीयसवनम् ।
यदूर्ध्वमुक्थेभ्य आनुष्टुभः स भाग इति ।
कथमु द्वादशस्तोत्र आनुष्टुभो भागः स्यादिति ।
सवनानि प्रति प्रविष्ट इति गौतमः ।
अष्टाक्षरा गायत्री हिङ्कारो नवमः एकादशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगती
च्छन्दोभिरेवानुष्टुभमाप्नोति यजमानस्यानवलोपाय । इति ।
अन्तस्थान एष भाग इति शौचिवृक्षिः ।
एकविँशस्तोमो वाक् सामान्तः ।
एष नूनं द्वादशस्तोत्र आनुष्टुभो भागः स्यादिति ।

सर्वैव षट्त्रिँशदक्षरेति शाण्डिल्यः ।
तत्र यच्चत्वार्यक्षराण्युपाहरति परोक्षचिकीर्षन्निति ।
पदप्रत्यवरोहँ शौचादिरेयः ।
यथैतद् ब्राह्मणम्--द्वादशाक्षरमेकादशाक्षरमष्टाक्षरं वाग्द्वात्रिँशीति ।
पञ्चदशस्तोत्रे सवनानि प्रति प्रविष्टइ त्येव गौतमः ।
अच्छावाकस्तोत्रीये शौचिवृक्षाः ।
अथ षोडशिनि सर्वैव चतुस्त्रिँशदक्षरेति शाण्डिल्यः ।
तत्र यद् द्वे अक्षरे उपाहरति परोक्षीचिकीर्षन्निति ।
उपसर्गाक्षराणि शौचिवृक्षाः ।
दशाक्षरपादँ शौचादिरेयः ।
अथातिरात्रे सर्वैव द्वात्रिँशदक्षरेति शाण्डिल्यः ।
तां यदभ्यासेन करोति परोक्षीचिकीर्षन्निति ।
वैतहव्यस्तोत्रीये शौचिवृक्षाः ४
अथायँ सन्धिरन्तर्भागं भवती३ बहिर्भागमिति ।
बहिर्भागमित्याहुः ।
समाप्तेषु भागेष्वागच्छति ।
अथाप्यस्या छन्दसा भक्षयति बहिर्भागमिवैव स तत इति ।
अन्तर्भागमित्यपरम् ।
का सा भक्तिर्या बहिर्भागमिति ।
अथाप्येनमुक्थैः सम्मिमीते ।
अन्तर्भागमुक्थानि भवन्ति ।
अन्तर्भागः सन् किंभागः स्यादिति ।
गायत्र इत्याहुः ।
समाप्तेषु भागेषु पुनरुपक्रमे कोऽन्यो गायत्रवान् स्यादिति ।
सर्वभाग इत्याहुः ।
सर्वभागं पृष्ठं ह्यत्र रथन्तरमिति ।
आनुष्टुभ इत्यपरम् रात्रानुबन्धतयेति ।
क्रमे भवती३ समास इति ।

क्रमे भवतीत्याहुः ।
समस्तेऽक्षरे रात्रिपर्यायाः क्रमे सन्धिरिति ।
अपि वा क्रमे रात्रिपर्यायाः समस्तेऽक्षरे सन्धिरिति ।
नैतदिह विज्ञायत इति शाण्डिल्यायनः ।
अमुत्र खल्वेतद्दशरात्रे विज्ञायते ।
इदं पदस्य स्थानमिदमक्षरक्रमस्येदं वृद्धेरिदँ समासस्येति ।
तत्र हि द्विर्भागाः प्रकल्पयन्त इति विज्ञायत एवेति ।
वाजाः पदस्थान्यहःसवनानि क्रमे षोडशी तमप्यभिविहारँ शँसति ।
एतमेवाक्षरक्रममनुचिख्यापयिषन् वृद्धौ रात्रिपर्यायस्थानमप्यभ्यस्यति ।
अभ्याघात्यसामानो हि छन्दोमाः इति ।
तदप्युभयोः सन्ध्योः सतोरेतमेव सन्धिरित्याचक्षते समासादिति ।
एतेन सर्वैकाहेषु सामभागा व्याख्याताः ५
अथ दशरात्रे कथं भागा इति ।
याथाकामी भागानामित्येक आहुः ।
अस्त्येवैकभाग्यमस्ति सर्वभाग्यम् ।
अपितु त्र्यहःश एव भागा स्युः ।
गायत्रः प्रथमस्त्र्यहः ।
त्रैष्टुभो द्वितीयः ।
जागतस्तृतीयः ।
आनुष्टुभः षोडशी ।
आनुष्टुभं दशमम् ।
तदप्येवमिव ब्राह्मणं भवति--प्रातःसवनेनैव प्रथमस्त्रिरात्रः कल्पते ।
माध्यन्दिनेन सवनेन द्वितीयः तृतीयसवनेन तृतीयः अग्निष्टोमेन साम्नैव दशममहः । इति ।
आथापरं गायत्रं त्रैष्टुभं जागतमिति प्रथमस्त्र्यहः एवमेव द्वितीय एवं तृतीयः ।
आनुष्टुभः षोडशी ।
आनुष्टुभं दशमम् ।

अथापरं गायत्रं त्रैष्टुभं जागतमिति प्रथमस्त्र्यहः ।
आनुष्टुभो द्वितीयः ।
गायत्रं त्रैष्टुभं जागतमिति तृतीयः ।
आनुष्टुभः षोडशी ।
आनुष्टुभं दशमम् ।
अथापरं गायत्रं त्रैष्टुभं जागतमानुष्टुभमिति प्रथमश्चतुरहः ।
एवमेव छन्दोमचतुरहो बहिर्भागे पञ्चमषष्ठ इति ।
अथापरं पदस्थः प्रथमस्त्र्यहः अक्षरस्थो द्वितीयः वृद्धस्तृतीयः ।
आनुष्टुभः षोडशी ।
आनुष्टुभं दशमम् ।
ते खलु शश्वद् भाल्लविनो भक्षाननुव्यूहन्ति ।
जगती प्रातःसवन आगमत् ।
तत्र जगच्छन्दसा भक्षयिष्याम इति ।
न वयमनुव्यूहामः ।
सवनभक्तिज्ञात्रा एव भक्षेषु स्म इति ।
अथ संवत्सरे चतुर्विँशं लुप्तभागमिति शौचिवृक्षिः ।
गायत्रं वा स्तोमज्ञात्रेण त्रैष्टुभं वा स्थानेन सर्वभागं वैकाह्यात् ।
अथाभिप्लवा ऐकाहिका वा स्तोमज्ञात्रेण षाडहिका वा तन्त्रज्ञात्रेण ।
त्र्यहभागात्स्वरसाम्नामानुष्टुभो विषुवाँश्चातुर्थ्यात् सर्वभागो वैकाह्यात् ६
अथाहीनेषु द्विरात्राणां गायत्रं पूर्वमहः ।
त्रिभागमुत्तरं यत्प्राग् ब्रह्मसाम्नस्तत् त्रैष्टुभम् ।
ब्रह्मसामप्रभृति जागतम् ।
आषोडशिनः षोडशिप्रभृति परमानुष्टुभम् ।
त्रिरात्राणां गायत्रं प्रथममहः जागतं द्वितीयम् त्रैष्टुभं तृतीयम् ।
आषोडशिनः षोडशिप्रभृति परमानुष्टुभम् ।
वैदत्रिरात्रे सर्वभागान्यहानि ।
चतूरात्राणां गायत्रं त्रैष्टुभं जागतमिति त्र्यहः ।
अक्षराक्षरे चतुर्थमिति शौचिवृक्षिः ।

समस्तेऽह्नरे इति गौतमः ।
पञ्चरात्रेष्वह्नराह्नरयोरेव चतुर्थपञ्चम इति शौचिवृह्निः ।
समस्तेऽह्नर इत्येव गौतमः ।
षड्रात्रप्रभृतिषु दाशरात्रिका भागा यावद्यावदभिप्राप्नुयुः ।
अथ यत्राहीन एकाहैर्वर्तेत सर्वभागास्तत्रैकाहाः स्युरित्येके ।
आहीनिका भागा यथास्थानमित्यपरम् ।
एतेनाहीनेषूपधीयमाना व्याख्याताः ।
अथ ये ऊर्ध्वं दशरात्रादुपधीयेरन् ये वा मध्ये दशरात्रस्य भागपर्वणि
सर्वभागा एव ते स्युः ।
एतेन सत्रेषूपधीयमाना व्याख्याताः ।
अहीनैकाहसमासा ह्येव सत्राणि भवन्ति ७
अथ सुब्रह्मण्यायां विचारयति--
ऋग्नु खल्वियं भवती३ सामेति ।
ऋग्भवतीत्याहुः ।
ऋच इवास्या नामधेयँ सुब्रह्मण्येति ।
सामेत्यपरम् ।
गीतँ हि भवति ।
अथाप्याहुः--मन्त्र एव खल्वयं शिथिलो भवति
आह्वानार्थस्तस्येयमभ्या इयँ स्यादिति ।
अथाप्याहुः--नैवेयमृङ्न साम सुब्रह्मैवेदमिति ।
ब्रह्मणो भवती३ उद्गातुरिति ।
ब्रह्मणो भवतीत्याहुः ।
एतेन ह्यग्रे संयुज्यते ।
अथापि ब्रह्मा सुब्रह्मण्य इति नामधेयसारूप्यात् ।
अथाप्येवँ सर्वा अहोरात्रा वषट्कारिण्यो भवन्ति ।
उद्गातुर्ह्याग्नीध्रः सम्पद्यत इति ।
उद्गातुरित्यपरम् ।
गीतकारी हि भवति ।

स यदभक्षः पुरा ह्यभक्षेभ्यः कर्मापवृज्यत इति ।
अथैनानागतत्वात् कालादहीनेषु सत्रेषु याजमानात् नामग्राहः किमर्थः इति ।
उच्चावचचरणाः स्त्रियो भवन्ति ।
स इह देवसाक्ष्ये च मनुष्यसाक्ष्ये च येषां पुत्रो वक्ष्येत तेषामेव पुत्रो भविष्यामि यांँश्च पुत्रान् वक्ष्यति ते मे पुत्रा भविष्यन्तीति शाकटीमन्ववरुह्याह्वयेद्राज्ञोऽप्रत्यारोहायाप्रत्यारोहाय ८

इत्यष्टमः पटलः

अथातो दशरात्रः ।
तस्य ब्राह्मणेनैव द्रव्यसमुद्देश उक्तः ।
यानि चैतानि ज्योतिष्टोमानि द्रव्यलक्षणानि ।
यानि च पृष्ठैः समानरूपाणि ।
यानि च दशरात्रेण समानसङ्ख्यानि ।
यथैतत् प्रथमानि प्रथमे द्वितीयानि द्वितीय इति ।
स्थानतोऽसमानसङ्ख्यँ सम्पश्येत् ।
अथैताः सप्त नामविभक्तयः--
स तं तेन तस्मै तस्मात् तस्य तस्मिन्निति ।
आमन्त्रिताऽष्टमी ।
स खलु विभक्तिमामन्त्रितां प्रथमेऽहनि करोति ।
कस्य हे तोरिति ।
प्रत्यक्षविभक्ति रथन्तरम् ।
आमन्त्रितस्य न परोक्षमस्तीति ।
अथाप्येषा प्रथमाग्निमन्थनीया भवति तां चतुर्थेऽहनि करिष्यन् भवति ।
तमिति द्वितीया तां द्वितीये ।
तेनेति तृतीया तां तृतीये ।
तस्मा इति चतुर्थी तस्या न द्रव्यं विद्यमानमाहुः ।
एकामुदाहरन्ति--

प्र तव्य॑सीं॒ नव्य॑सीं धी॒तिम॒ग्नये॑ इति ।
सैषा प्रतवती भवति भागान्तेऽपरूपा ।
स इति प्रथमा तां चतुर्थेऽहनि करोति ।
कस्य हेतोरिति ।
प्रत्यय एष भागानां प्रत्यय एष विभक्तीनाम् ।
प्रत्यये प्रत्ययम् ।
अथापि नामधान्येषा भवति ।
एतस्मिन्नहन्यग्निं जनयन्ति ।
जातस्यो नाम धीयत इति ।
तस्य ब्राह्मणं भवति--देवा वै श्रियमैच्छँस्तान्न प्रथमेऽहन्यविन्दन्न
द्वितीये न तृतीये तां चतुर्थेऽहन्यविन्दन् इति ।
एताँ श्रियमाह--
नामधेयं ह विभक्तयः श्रिता भवन्तीति ।
अथाप्येषा द्विसँशया पञ्चमेऽहनि भवति ।
तस्येति वा तस्मादिति वा ।
तस्मादिति भवतीति गौतमः ।
ताँ शश्वदेके चतुर्थीं ब्रुवते ।
तां ततो नामधान्या प्रच्युतामनन्तरस्मिन्नहन्यनुगृह्णाति ।
तदप्येवमेव ब्राह्मणं भवति--तेनो श्रीः प्रत्युपोदितेति ।
ब्रह्मण आज्ये निरुच्यते--
२ ३ १ २ ३क२र
इन्द्रात्परितन्वं ममे इति ।
तस्येति भवतीति धानञ्जय्यः ।
सा षष्ठी तामामन्त्रितया प्रच्युतामनुगृह्णाति ।
अथाप्येतयोः पूर्वयोस्तृतीयया समानं द्विवचनम् ।
स तयैव ते उपाप्ते अमँस्त--
अपि वा प्रत्यवरोहार्थ एवाकरिष्यत् ।
समूढाज्ये निरुच्यते ।
अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।

३ १ २ ३ १ २
देवस्य द्रविणस्य वः ॥
इत्यभविष्यदिति ।
अथापि व्यूढाज्य एव भवति ।
२ ३ १ २ ३क २र ३ २ ३
तव श्रियो वर्ष्यस्येव विद्युतः इति ।
त्वच्छ्रिय इत्यभविष्यदिति ।
आमन्त्रितैव षष्ठे भवति ।
एवमाद्यवसानसमाधिरिति ६
अथैषा स्वरविभक्तिः--औशनं प्रथमे वासिष्ठं द्वितीये उभयतः स्तोभं गौतमं तृतीये आभीशवं चतुर्थे आनूपं पञ्चमे इहवद्वामदेव्यँ षष्ठे ।
अथैषा निधनविभक्तिः--नौधसं प्रथमे श्यैतं द्वितीये महावैष्टम्भं तृतीये आथर्वणं चतुर्थे बार्हद्गिरं पञ्चमे गोष्ठः षष्ठे ।
अथैषैडाविभक्तिः--कालेयं प्रथमे माधुच्छन्दसं द्वितीये रौरवं तृतीये पृश्नि चतुर्थे रायोवाजीयं पञ्चमे गोष्ठ एव षष्ठे ।
अथैष छन्दोमेष्विडाविभक्तिः--
जराबोधीयँ सप्तमे ।
इडानाँ सञ्चारोऽष्टमस्य सती नवमेऽहनि क्रियते ।
प्रतीचेनेडं काशीतं नवमे ।
उत्सेधो दशमे ।
अथ नौधसे वदति--
इन्द्रं गीर्भिर्हवामहे इति ।
तत्खलु हवामह इत्येव कर्तव्यम् ।
विधिप्रमाणात् ।
कथमयथाविधि कुर्यामिति ।
आम्नायद्वैतेन ब्राह्मणमुपवर्णयतीत्यपरम् ।
तन्नियोगाय न प्रभवतीति ।
एतेनैतद् व्याख्यातम्--
१ २ ३ १ २३ १ २र
अक्रान्त्समुद्रः परमे विधर्मन् इति ।

यानि चैवंजातीयानि--
यथाद्वारे वदति--
यः पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्यादाद्वारं ब्रह्मसाम कुर्वीत इति ।
किं तस्य स्थाने स्यादिति ।
एते एवान्योन्यस्य स्थानं व्यतिहरेत् ।
नौधसमुष्णिहि कुर्यादिति ।
तदाहुः--व्यतिहरति चेद्यत्र बृहत्षोडशिसाम स्याद् गौरीवितं नूनं
द्वितीयस्याह्नः पृष्ठं कुर्यादिति ।
अथ वै सञ्चारयेदिति ।
सञ्चारयति चेद्गौरीवितमेवानुष्टुभि कुर्यात् गौरीवितँ षोडशिसामेति ।
अथ वै प्रतिनिदध्यादिति ।
प्रतिनिदधाति चेद्यत्र बृहत्षोडशिसाम स्यात् किं तत्र बृहत्सदृशं
द्वितीयस्याह्नः पृष्ठं कुर्यादिति ।
अथ कथँ स्यादिति ।
सञ्चारयेदहः ।
नानाहःसु यानि सञ्चारिधर्माणि स्युः प्रतिनिदध्यात् ।
समानेऽहनि व्यतिहरेत् यत्र व्यतिहारमभिरूपं मन्येत ।
प्रतिनिधिष्विहाभिरूपतरम् ।
पौष्कलमुष्णिहि कुर्यात् ।
एतच्च ज्योतिष्टोमानां द्रव्याणां दशरात्रे निहितं भवति ।
अपिच यदनिधनँ राथन्तरेऽहनीति ।
यज्ञायज्ञीयमग्निष्टोमसाम यज्ञे यज्ञे कुरुतेति ।
तदेवाभिवदति ।
अथाप्येष तृतीयसवने सामान्तस्तमदिदर्शयिषीत् १०
अथ वैरूपे वदति--
यथा मण्डूक आट् करोत्येवं निधनमुपयन्ति इति ।
कस्येदं ब्राह्मणँ स्यादिति ।
कृता राथन्तरीडा कृता बार्हतीति कौत्सः ।

तदिदमकृतकारं ब्राह्मणमर्द्धेडाब्राह्मणꣳ स्यादिति ।
पञ्चमे सेयं प्रत्याहृता भवतीति गौतमः ।
तां परोक्षीकृत्याभिव्याहरेयुः ।
एवं पञ्चमेऽहन्ययातयामा भवतीति ।
तदप्येवमिव ब्राह्मणं भवति--अयातयामतायै इति ।
तत्र कः परोक्षीभाव इति ।
आकारटकारौ वा कुर्युरिकारेकारौ वा ।
एवमेकवर्णविकारः ।
इकारन्त्वेवायिकारीकुर्युः ।
एतस्मिन् परोक्षीभाव उपलभ्यत इति ।
पददैवतं व्यत्यस्यति ।
वैरूपे विरूपमचिकीर्षत् ।
अवरमेवेदमहः सत् परमत्यस्तं भवतीत्यपरम् ।
व्यत्यासे व्यत्यासं करिष्यामीति स्तोत्रवशेनेति धानञ्जय्यः ।
यदव्यत्यस्यन् पददैवतम् ।
पदा यत्प्रत्याहारयिष्यदिति प्रत्यवेतस्तदा प्रतिहारोऽभविष्यत् ।
यद्यु वै देवतायै बहिर्ऋचं प्रतिहारोऽभविष्यत् ।
अथेत्थमनतिप्रत्याहृतोऽन्तर्ऋचं भवतीति ।
अथाप्यस्य छान्दसमध्यायं विद्यमानमाहुः ।
अथ खल्वाह--द्वादश वैरूपाणि भवन्ति । इति ।
कस्येदं ब्राह्मणꣳ स्यादिति ।
संवत्सरब्राह्मणमित्याहुः ।
संवत्सरे द्वादशकृत्वो होतृषाम भवति ।
तस्येदꣳ संवत्सराप्तिं वदेदिति ११
अथ प्रमꣳहिष्ठीये वदति ।
हिꣳसितोऽन्वीक्षेत यमिच्छेत् प्रसृज्यमानं न प्रत्येयादिति ।
तमनुगायेद् दक्षिणमक्षि निकुटय्य सव्यꣳ सक्थि गृह्य ।
अथायं न प्रत्येयादिति काकुभ उक्थप्रणयः पृष्ठच्छन्दसोऽन्वभिवृद्धिः ।

अथ स्वःपृष्ठस्याङ्गिरसस्य निधनयोरानुपूर्व्ये विवदन्ते ।
स्वःपूर्वमिडोत्तरेत्येके ।
एवमेतयोः सामन्तयोरानुपूर्व्यं भवति ।
इडां वयं पूर्वां कुर्मः ।
एवमनयोः समानोपायादभिव्याहारं पश्यामः ।
यथा राजने माधुच्छन्दस इति ।
अथ वैराजं त्र्यनुतोदमेके कुर्वन्ति ।
एवं छान्दसोऽध्याय इति ।
चतुरनुतोदं वयम् ।
एवमाचार्यवच इति ।
तेन वात्सप्रँ समादध्यात् ।
यदीदं त्र्यनुतोदँ तत् ।
यदि चतुरनुतोदं चतुरनुतोदं तत् ।
तदप्येवमिव ब्राह्मणं भवति--एतस्मिन् वै वैराजं प्रतिष्ठितमिति ।
अथ कतमे विष्टम्भा इति ।
देवता इत्याहुः ।
देवताभिः पदानि विष्टब्धानीति ।
तदाहुः--एकादशेमा देवता दशकृत्वो विष्टभ्नोतीति ।
दशैताः सप्राया भवन्ति ।
अपि वा य एते देवतान्तरेषु पदवत्स्तोभास्तान् विष्टम्भानवोचत ।
तैर्देवता विष्टब्धा इति ।
अथैतयोरक्षरयोर्विवदन्ते ।
ऋगक्षरे स्तोभाक्षरे इति ।
ऋगक्षर इति लामकायनः ।
तदभिव्याहारेण जानीमः--यादृशे इमे ऋगक्षरे तादृशे इमे भवत इति ।
अथाप्यादित्यसदृशं वैराजम् ।
यादृश इत आदित्यस्तादृशः परस्तात् ।
तद्रूपं दिदर्शयिषन् प्रथमे ऋगक्षरेऽन्त्याक्षरं परिहरति ।

अथाप्युच्चावचाः सामवृत्तयो भवन्ति ।
यथैतत् साम्नयुपेतानि पुरारब्धादीनि ।
तन्नयायं मन्यन्ते ।
स्तोभाक्षर इति धानञ्जय्यः ।
पश्यामः खलु पदानुरूपान् स्तोभानृचोऽन्ववयतः ।
यथैतज्जनद्वत्यामृचि जनद्वान् स्तोभोऽपि ।
सिद्धमतो हि राक्षोघ्नीषु ।
एवमिमे पीतवत्यामृचि पीतवती स्तोभाक्षरे भवत इति ।
अथाप्यादित्यसदृशं वैराजम् ।
यादृश इत आदित्यस्तादृशः परस्तात् ।
तद्रूपं दिदर्शयिषन् पदानुरूपे स्तोभाक्षरेऽन्तं परिहरति ।
नो एतत् क्वचन पश्यामः ।
प्रथमे ऋगक्षरेऽन्तं परिह्नियमाण इति ।
अथैषातिजगती भावप्रत्यये छन्दस्तोमरोहमदिदर्शयिषीत् ।
विराजं वा वैराजेऽहन्यचिकीर्षीत् ।
विराडियं पञ्चाशदक्षरा बृहत्यावुत्तरे तेन बृहतीभ्योऽनपेतं भवतीत्यनपेतं भवतीति १२

इति नवमः पटलः

अथैतासु महानाम्नीषु विप्रतिपादयन्ति--
इदं शाक्वरमिदमशाक्वरमिति ।
अशाक्वरी प्रथमा द्विपदा शाक्वराणि त्रीणि पराणि पदानि ।
धातुरशाक्वरः पञ्चाक्षरः ।
स एष कताकृतो भवति ।
वत्सोऽशाक्वरोऽष्टाक्षरः ।
ऊधः शाक्वरमष्टाक्षरम् ।
अभ्यासवत् तस्य द्व्यक्षरान् पदादीन् प्रतिनोदा इत्याचक्षते ।
पुरुषोऽशाक्वरः पञ्चाक्षरः शाक्वराण्येव त्रीणि पराणि पदानि ।

अध्यासोऽशाक्वरोऽष्टाक्षरः ।
तस्य प्रस्तावयति न प्रतिहारयति ।
एतेनैवोत्तरयोः शाक्वराणि चाशाक्वराणि व्याख्यातानि ।
द्व्यध्यासोत्तमा शक्वरी भवति ।
अध्यासाः किमर्था इति ।
लोकोक्ताः शक्वर्यः साध्यासा इमे लोका भवन्ति ।
अग्निर्वायुरिति पूर्वयोः ।
आदित्यश्चन्द्रमा इत्युत्तरस्य ।
तस्माद् द्व्यध्यासोत्तमा शक्वरी भवति ।
अथ खल्वाह--द्व्योपशाः सँस्तुता भवन्ति इति ।
कस्येदं ब्राह्मणँ स्यादिति ।
उत्तमाया द्व्यध्यासाया इत्याहुः ।
एकाध्यासे पूर्वे द्व्यध्यासोत्तमा ।
तस्या इदमभिनन्दं ब्राह्मणं वदेदिति ।
अपि वा समस्तब्राह्मणमेव स्याद् ।
द्व्योपशे पूर्वे द्व्योपशोत्तमेति ।
ऊधसोऽभ्यासब्राह्मणं मन्य इति वार्षगण्यः ।
एवमिव ब्राह्मणं भवति--इडेऽभितोऽथकारं तस्माच्छृङ्गे तीक्ष्णीयसी स्तूपात् । इति ।
उपशोक्तानि शृङ्गाणि भवन्तीति ।
अथ खल्वाह--दिशः पञ्चपदा दाधारर्त्तून् षट्पदा छन्दाँसि सप्तपदा पुरुषं द्विपदा इति ।
प्रतिलोमं वदन्ति ।
पादतश्छिद्रोहो भविष्यतीति ।
सप्तपदा प्रथमा शक्वरी षट्पदा द्वितीया ।
यद्धि प्रथमाया उत्तमं पदं तद् द्वितीयायाः प्रथमम् ।
प्रगाथः सानुपृष्ठमिति पञ्चपदोत्तमा ।
यद् द्वितीयाया उत्तमं तत् तृतीयायाः प्रथमं च द्वितीयं च ।

नवपदाः पुरा बभूवुरिति लामकायनः ।
ताभ्यो रेवत्यो निर्मिताः ।
द्वे प्रथमायाः पदे त्रीणि द्वितीयायाः चत्वारि तृतीयायाः ।
तदप्येवमिव ब्राह्मणं भवति--सिमाभ्यो ह्यधिरेवत्यः प्रजायन्ते ।
इति ।
नवपदा एव भविष्यन्तीति ऊधश्चाभ्यस्यति पदं चानुसँहरति ।
अथापि नवपदा एवाभिरूपतरा न विपर्याये त्रिणव इति १३

अथ चतुर्थः प्रपाठकः

अथ खल्वाह—गायत्रमयनं भवति त्रैष्टुभमयनं भवति जागतमयनं भवति ।
किमयनँ स्यादिति ।
ऊधसि विकारो दृष्ट इति गौतमधानञ्जय्यौ ।
य एष मध्य ऊधसोऽथकारस्तँ स्वरिति कुर्यात् ।
तद्गायत्रमयनम् ।
अथेति त्रैष्टुभम् ।
इडेति जागतम् ।
तदाहुः--विकृतोऽथकारः अविकृतस्य को विकारः य एवाभित इडे ते विकुर्यादिति ।
सर्वमेवोधर्विकुर्यादिति ।
अथाप्याहुः--अविकृतमेवोधः स्यात् अन्त्येडामेव विकुर्यात् अन्त्याख्यानि कर्माणीति ।
अथाप्याहुः--अविकृतैवान्त्येडा स्यात् यदेव प्रागन्त्येडायास्तद्विकुर्यात् तद्ध्ययनं भवतीति ।
ते कस्य हेतोर्जागतमयनँ समारप्स्यन्तीति ।
नेदं जागतमिति शाण्डिल्यायनः ।
यानि त्वत्र निधनानि तानि स्वरिति कुर्यात् ।
तद् गायत्रमयनम् ।
अथेति त्रैष्टुभम् ।

इडेति जागतम् ।
अथेदं मिश्रनिधनँ सर्वाभिप्रायम्--
यथेदमधीमह इति ।
ऊर्ध्वँ शक्वरीभ्यः पञ्च पुरीषपदानि पञ्चाक्षराणि तेभ्यः प्रस्तावयति न प्रतिहारयति न शश्वदेकेऽध्यासपुरीषपदानां प्रस्तावयन्ति प्रतिहारोपायान् प्रस्तावोपेयादिति ।
प्रस्तावयामो वयम् ।
अन्यदिदँ शक्वरीभ्यः ।
तत्कथमप्रस्तुतं क्रियेतेति ।
सँरोधात्तु नूनं प्रतिहारोपायात् ।
ते खल्विमे बहवः प्रस्तावाः ।
कथमोङ्कार इति ।
प्रस्तावनिमित्त ओङ्कार इत्येके ।
प्रस्तावे प्रस्ताव ओङ्कारेणाददीत ।
अथाप्याह--रसो वा एष साम्नां यदोङ्कारः ।
नैतेनातिरेकोऽस्तीति ।
प्रथम एव प्रस्ताव इत्यपरम् ।
स्तोत्रीयाया एतान्यङ्गानि भवन्ति ।
सकृत्तु खलु स्तोत्रीयाया ओङ्कारो भवति ।
अथापि परिचष्ट ऊर्ध्वं प्रतिहारादोङ्कारेणादानम् ।
अथाप्येवमन्यैः सामभिः समाधिरिति १
ते खलु शश्वदेके पुरीषपदैः प्रतिपद्यन्ते ।
पञ्चविधेन पञ्चमस्याह्नः पृष्ठं प्रतिपत्स्यामह इति ।
अथाप्येवँ शक्वर्यवसानँ स्तोत्रं भविष्यतीति ।
अथाप्याह--गोष्ठः पुरीषमिति कृत्वा वै गोष्ठं पशूनुपाकुर्वन्ति ।
अन्ततो वयं कुर्मः ।
एवं च छान्दसोऽध्यायः ।
अपि चैवं पञ्चविधं पञ्चमस्याह्नः पृष्ठमनुसँस्थास्यत इति ।

यद्वेतद् गोष्ठः पुरीषमिति इष्ट्वा वै पशून् गोष्ठं कुर्वन्ति ।
अथापि पश्चार्धसेविपुरीषमिति ।
तत्खलु सर्वाभिः सह स्यादित्याहुः ।
तृचदृष्टय इमा भवन्ति लोकदृष्टयः ।
तदिदमन्तेऽनुषङ्गस्थाने समाम्नातं भवति ।
अथाप्येवं सर्वास्वस्य पुरीषा भविष्यन्तीति ।
व्यवायश्चाभविष्यदतिगुरू च ।
अथ वै विष्टावान्तेषु विष्टावसमाधय इति ।
व्यवायश्चैव गुरू च ।
अथ वै पर्यायान्तेषु पर्यायसमाधय इति ।
व्यवायश्चैव गुरू च ।
अथ वा उत्तमामेवानुचरेत् ।
एतया हि सहोत्पन्नं भवतीति ।
व्यवायश्चैव गुरू च ।
सकृदन्ततः स्यादित्याहुः ।
एतच्चासां लघिष्ठम् ।
अपि चैवमँव्यवायः ।
अथापि परिनिष्ठायाशिषमुदित्वान्तेऽनुज्ञां वदिष्याम इति ।
अथापि पश्चार्धसेविपुरीषमिति तासां धर्मो नियुज्यते--न व्याहरेत्
नाश्नीयात् अभिनद्धाक्षं आसीत ।
प्रवेकोऽयं ब्रह्मणो भवति ।
तन्नो ह प्रतिलभ्य प्रदहेत् ।
एतमेवाहं ब्रह्मचर्यं धर्ममु मन्य इति गौतमः ।
तत्त्वतिगुरु वाभविष्यत् ।
अपि च नो ह मरणाशङ्कमिमास्तु सर्वच्छन्दस्या भवन्ति ।
आसामेव चरतः सर्वच्छन्दसामिव व्रतं चरितं भविष्यतीति ।
अथाप्याहुः--यानि रूपाणि ब्रह्मचारी न पश्यति यान् रसान्नाश्नाति
लब्ध्वा हैनान् समावृत्य भवति ।

तमेतद्रूपेभ्यश्च रसेभ्यश्च समवरुन्धन् मन्यत इति २
तासां खलु त्रीन् संवत्सरान् ब्रह्मचर्यं चरेत् ।
कृष्णवस्त्रः कृष्णभक्ष आचार्याधीनस्तपस्वी तिष्ठेद्दिवासीत नक्तम् ।
सायं प्रातरुदकोपस्पर्शी सर्वभूतेभ्यः पन्थानमददद्वर्षति ।
शरणां नातीयात् ।
नित्यँ स्निग्धवासा बुभूषेत् ।
उदकसाधवो हि महानाम्न्य इति ।
एवं खलु चरतः कामवर्षी पर्जन्यो भवति ।
उदकोपस्पर्शनं किमर्थमिति ।
अबुक्ताः शक्वर्यस्ता एव प्रविशन् मन्यत इति ।
अपि वा पशूनामेव पायनार्थँ स्यात् पशूक्ताः शक्वर्य इति ।
स खलु प्रथमाँ स्तोत्रीयामनुगाप्याहोरात्रे वाग्यतः परिणद्धाक्ष आसित्वा
तस्याँ संवत्सरं ब्रह्मचर्यं चरेत् ।
एवमेव द्वितीयायाः ।
एवं तृतीयायाः ।
ते खलु शश्वदेके प्रथमत एव परिषह्यन्ति ।
प्रथमत एव यथा न प्रधक्ष्यतीति ।
अध्यासं प्रत्येके ।
अध्यासं प्रत्यध्यसिष्यामह इति ।
अपि तं प्रातरभिवीक्षयन्ति योन्यं प्रधक्षन्तं मन्यन्ते योऽग्निं वत्समादित्यम् ।
अपोऽभिव्यख्यमित्यपः ।
ज्योतिरभिव्यख्यमित्यग्निम् ।
पशूनभिव्यख्यमिति वत्सम् ।
स्वरभिव्यख्यमित्यादित्यम् ।
अथाप्येतदिवैवैता भवन्ति ।
आप इवाग्निरिव वत्स इवादित्य इवेति ।
अथ खल्वाह--पार्थुरश्मँ राजन्याय ब्रह्मसाम कुर्यात् बार्हद्गिरं
ब्राह्मणाय रायोवाजीयं वैश्याय इति ।

पार्थुरश्मं चेद् ब्रह्मसाम स्यात् बार्हद्गिरस्यैतदृचु कुर्यात् ।
यद्यु वै रायोवाजीयमेते बार्हद्गिररायोवाजीये स स्तोत्रीयेऽन्योन्यस्य स्थानं व्यतिहरेत् ।
कथमुभयेषु समवयत्स्विति ।
भूम्नो वशं नयेद् गृहपतेरित्येके ।
अपि वा बार्हद्गिरमेव कुर्यात् ।
नित्यं च श्रेष्ठवर्णीयं चेति ।
वैश्वामित्रस्तोत्रीये षोडशिना स्तूयमान आष्टमिकमुक्थ्यस्तोत्रीयं प्रतिनिदध्यात् असञ्चाराय वीङ्कस्तोत्रीये वसिष्ठस्य प्रियमनुकल्पयेद् वसिष्ठस्य प्रियमनुकल्पयेत् ३

इति दशमः पटलः

अथ षष्ठेऽहनि रेवतीषु वारवन्तीयं पृष्ठं भवति ।
तदेके प्रत्यक्षं ब्रुवते ।
एतत् प्रकृतौ दृष्टं भवतीति ।
अथापि यद्रेवत्यः पृष्ठमभविष्यन् पवमान आसां धर्ममकरिष्यन्निति ।
अथाप्यनुरूपाग्निष्टमसाम्नि वारवन्तीयस्यैवानुरूपं कल्पयतीति ।
रेवत्य इत्यौष्ट्राक्षीरेवतीषष्ठाना॑ सृष्टिब्राह्मणं भवति ।
तासां धर्मो नियुज्यते--तद्गवां घोषोऽन्वसृज्यत । इति ।
अथापि प्रतिपद्भिः पृष्ठानि संवर्णयन् रेवतीरेवाभिसंवर्णयति षष्ठे च विश्वजिति च ।
अथापि पृष्ठ्यस्तोमात् पृष्ठानि च्यावयन् रेवतीरपि च्यावयति ।
अथाप्यनुगृहीतपृष्ठे रेवतीरेवानुगृह्णातीति ।
अथापि परोक्षपृष्ठोपाङ्क्यपृष्ठयोरनुगृहीतपरोक्ष इति वारवन्तीयमेवानुगृह्णाति ।
यद्वेतदेतत् प्रकृतौ दृष्टं भवतीति ब्राह्मणेनैव कारणं वदति ।
यद्वेतत् पवमान आसां धर्ममकरिष्यन्निति उपाप्तं पृष्ठत्व॑ स्तोत्रीयेण मन्यते ।

यद्वेतद्वारवन्तीयस्यैवानुरूपं कल्पयतीति उक्तं वारवन्तीयस्य परोक्षम् ।
तदेतद् रेवतीपरोक्षमेव भवतीति ४
अथ खल्वाह प्रायणतो द्विपदाः कार्या३ उदयनता३ इति ।
कथं प्रायणतः स्युरिति ।
प्रथमेऽहनीत्याहुः ।
एतद्धि प्रायणं भवति ।
अथापि दृश्यते प्रायणीयस्योक्थत्वं यथा चतुर्विँशस्य ।
तथा षष्ठस्याग्निष्टोम्यं यथाभिप्लविकस्येति ।
द्वितीय इत्यपरम् ।
एतदुक्थानां प्रायणं भवति ।
अथाप्येवमुक्थव्यतिहारः सिध्यति ।
अथाप्येवं प्रकृतिसविधतरं भवतीति ।
कथमावृत्ते पृष्ठ्ये सँस्थाधर्मा इति ।
आवृत्तस्याप्यन्त एव स्युरित्येके—यदा षडहः सन्तिष्ठत इति हि भवतीति ।
अथापि षडहधर्मा इत्याचक्षते ।
नचैतत् षष्ठस्य साधीयो यथो च प्रथमस्य ।
त्रयस्त्रिँशस्य त्वेव सँस्थायामित्याचार्याः ।
स एतदावृत्तेरवयवः ।
य इत उपक्रमधर्मः स परस्तात् सँस्थाधर्मः ।
यः परस्तात् सँस्थाधर्मः स इत उपक्रमधर्म इति ।
अथापि य एनानावृत्तस्यान्तं परिहरेत् सर्वाण्येव नूनँ
सोन्तलक्षणान्यावृत्तस्यान्तं परिहरेदिति ५
त्रीणि दशरात्रस्य विच्छिन्नानीति शाण्डिल्यः ।
पञ्चममभितो द्वे षष्ठादूर्ध्वमेकम् ।
तेषां सन्तानाय सन्तनीति ।
अनुपूर्वँ सूक्तानुरूपाँश्छन्दोमान् करोति पृष्ठ्यच्छन्दोमानामकृतकाराय ।
अथाप्यकृताः ।
अतः प्राक् सूक्तानुरूपतेति ।

अथापि प्रजापतिसँस्तावेषु प्रजास्थानमंभ्यवर्द्धयिषीत् ।
बृहद्रथन्तरे पृष्ठे नहि षाडहिकान्यनुभवन्ति ।
नो व्यलुलुप्सीत् ।
अथापि शिथिलोक्ता
तेषां प्रत्यक्षाभ्यां पृष्ठाभ्यां दृढीभावो भविष्यतीति ।
अथापि तम उक्ताः ।
ते एते ज्योतिषी साम्नाम् ।
स कस्य हेतोः ।
बृहत्पूर्वं युक्त इति ।
कृतयोः क्रियमाणयोरेषा कृताकृतिः ।
अथापि स्तोमप्रत्यवाये पृष्ठतो रोहमदिदर्शयिषीत् ।
वर्ष्मोक्तं बृहदिति ।
अथापीदं व्रतस्थानं बृहदाप्तितया व्रतस्य मानसतया ते व्यत्यासं प्रयुङ्क्ते ।
तत् कुशलं वाङ्निधनानि माध्यन्दिनान्त्यान्यैडान्यर्भवान्त्यानि
सवनच्छन्दसोरनुग्रहाय ६
अर्कपृष्ठान् पैङ्गिनोऽधीयते ।
सैषा छन्दोमानां पृष्ठभक्तिः ।
तेषां पृष्ठत्वे तिष्ठमानो न साक्षात् करोति ।
बृहद्रथन्तरे वा निकामयमानः पूर्वावार्भवे करोति ।
एवं नेदीयसी पृष्ठानाम् ।
सप्तमेऽहनि कृताकृतो भवत्यब्राह्मणविहितत्वात् ।
कर्तव्य इत्याचार्याः ।
छन्दोमानां चार्कसमाधिः ।
यथा चैतत् पैङ्गिनोऽधीयते छन्दोगाश्चाप्येनमेकेऽधीयते ।
अथापि सँरोधेऽनुगृह्यते यथा त्रिवृति दशरात्र इति ।
नवमेऽहनि समे स्तोमे सति साध्यासां बृहतीं करोति ।
कस्य हेतोरिति ।
साध्यासा पूर्वेऽहनि कृता ।

स एवमप्रत्यवायः ।
अथापि बह्वियं चरति ।
तस्याः पथ्यतामपिपादयिषीत् ।
दाशरात्रिकाणां द्रव्याणां पथ्याख्या ।
अथाप्येतस्यामेवैतँ सामयोगँ साधीयो ह्यश्नुत इति ।
त्रैककुभस्य निधने विवदन्ते ।
पदनिधनमित्येके ।
यादृशे इमे ऋगक्षरे तादृशे इमे भवत इति ।
बहिर्णिधनमित्यपरम् ।
बहिर्णिधनस्थाने च युज्यते ।
अपि चास्य निधनवादो भवति ।
बहिर्णिधनानामुत निधनवादा भवन्ति ।
अथाप्यापद्यते ज्योतिर्विचारान् ।
यत् पदनिधनमभविष्यदत्यरेक्ष्यत ज्योतिष्टोमीं मात्राम् नास्य प्रतिनिष्कारं कल्पयति बहिर्णिधनस्येव सत इति सत इति ७
इति प्रथमः पटलः

अथ दशमेऽहनि चतुर्ऋचँ होतुराज्यँ समामनामः ।
तस्य मध्यमे भवतः--तानूनपाती च नाराशँसी च ।
द्वयानि कुलानि भवन्ति--तानूनपातीनि च नाराशँसीनि च ।
तानूनपातीं तानूनपातेषु कुर्यात् नाराशँसीं नाराशँसेषु ।
वसिष्ठशुनका अत्रयश्च वाध्र्यश्वाश्च कण्वाश्च सङ्कृतयश्चैतानि नाराशँसानि ।
अथेतराणि तानूनपातीनीति ।
कथमुभयेषु समवयत्स्विति ।
भूम्नो वशं नयेत् गृहपतेरित्येके ।
अपि वा तानूनपातीमेव कुर्यात् ।
एषा भूयिष्ठानां कुलानां भवति ।

अपि चैतामेवैकेऽधीयते ।
अथाप्येषा समारब्धतरा भवतीति ।
अथ मानसम् ।
दशमस्य भवती३ सर्वस्याहो एव दशरात्रस्येति ।
दशमस्येत्याहुः--
नैनं दशमेनाह्ना विप्रयुज्यमानं पश्यामः ।
अथापि दशमधर्मा इत्याचक्षते ।
अथापि साद्ध मानसेन विराडनुष्टुपसम्पत्तिसिध्यति ।
अथाप्याहुः--सर्वमेवेदमहः पुरा मानसं बभूव ।
तदतिगुर्विति ।
वाचँ समापादयाञ्चक्रुरेकस्तोत्रं चित्तं धर्ममनु प्रब्रुवन् स्थास्यतीति ।
अथापि वागुक्तमहः ।
संयुक्ते वाङ्मनसे भवत इति ।
न दशमस्येत्यपरम् ।
उपरिष्टात् पत्नीसंयाजानां भवति ।
यन्नूनं दशमस्याभविष्यत् पुरस्तात् पत्नीसंयाजानामभविष्यदिति ।
अथाप्यत्र त्रिकस्तोमः ।
कथं त्रयस्त्रिँशं कृत्वा समानेऽहनि त्रिकं पर्यवैष्यदिति ।
अथाप्यत्र गायत्रं छन्दः ।
कथं त्रयस्त्रिँशदक्षराः कृत्वा समानेऽहनि गायत्रं पर्यवैष्यदिति ।
अथापि गायत्रं साम ।
कथमग्निष्टोमसाम कृत्वा समानेऽहनि गायत्रं पर्यवैष्यदिति ।
अथापि वाग्भवत्यन्यन्मनः ।
नास्य भूयान् दशमेनाह्ना सम्बन्धो यथो च प्रथमेनेति कापटवः ।
सर्वं वैतद् दशरात्रस्य सर्वो वैतस्य दशरात्र इति शाण्डिल्यायनः ।
आयामवाचं दशक्रमं मनो व्याप्नुवाम ।
न संयुक्ते वाङ्मनसे भवत इति ८
अत्र गायत्रीः करोति ।

स्थानं गायत्रीणां यदि परस्याह्नो गुर्वेवेदँ स्तोत्रं तत्र लघिष्ठं
छन्दोऽचिकीर्षीत् ।
अथाप्येवमाद्यवसानसमाधिः ।
प्रतिष्ठार्थो वाव गायत्रीः करोतीति ।
तासु विवदन्ते--ऐन्द्र्यः प्राजापत्यः सार्पराज्ञ्यश्चान्द्रमस्यः सौर्य इति
शाकपूणिः ।
तथा धानञ्जय्यः ।
प्रत्यय आदित्यः प्रत्ययो मनः ।
प्रत्यये प्रत्ययम् ।
तत्र गायत्रं करोति ।
स्थानं गायत्रस्य यदि परस्याह्नो गुर्वेवेदँ स्तोत्रं तत्र लघिष्ठं
सामाचिकीर्षीत् ।
अथाप्येवमाद्यवसानसमाधिः ।
प्रतिष्ठार्थो वाव गायत्रं करोतीति ।
यज्ञायज्ञीयगौरीवितिरथन्तरवामदेव्यान्येवंयुक्तानि सामव्यूह इत्याचक्षते ।
अथैतस्मिन् ब्रह्मोद्ये वदति ।
भूयाँसीव ह स्म शाण्डिल्यः प्रतिदिशति ।
यद्वादोऽश्वत्रिरात्रे ब्रह्मोद्यं तद्वा प्रत्ययिष्यद्यथा वैतद् ब्राह्मणा अधिमन्त्रँ
समुदाहरन्तीति ।
वरवरणमत्र भवत्यन्तनिर्वचना आशिष इति ।
वृत्वा वरानौदुम्बरीँ समभिपद्यन्ते सर्वकृतिं कृत्वा निस्वरिता इव
मन्यन्ते ।
अत आत्मानमूर्जा प्रत्याप्याययन्तो मन्यन्त ऊर्गुदुम्बर इति ।
समाप्ते छन्दोव्यूहे सामव्यूहं कुरुत इति गौतमः ।
अकृतकारार्थः त्रयस्त्रिँशमग्निष्टोमसाम करोति ।
उपवदितान् छन्दोमानवसानेऽचिकीर्षीत् ।
अथापि शिथिलोक्ताः ।
प्रतिष्ठोक्तश्च त्रयस्त्रिँशः तमवसानेऽचिकीर्षीत् ।

अथापि त्रयस्त्रिँशे क्रियमाणे त्रिके सार्पराज्ञे त्रिँशतःस्तोत्रीयं
दशममहः सम्पद्यते सा विराट् ।
अथाप्येवं द्वादशपञ्चविँशानहः सम्पद्यते ।
नोहैनमृक्स्थाक्षरादकारिषँ सम्पदा चिदेनमुपाप्स्यामीति ।
एतद्वयँ शाण्डिलम् ९
पञ्चदशस्तोत्राज्ज्योतिष्टोमात् सषोडशिकाँ ससन्धिकाँ रात्रिं ब्रूहीति ।
चतुर्विँशतिमाज्येभ्य आदत्ते ।
द्वे वामदेव्यात् चतस्रः साकमश्वात् दश गायत्रास्तृचाः तान् रात्रेः स्थाने
निदध्यात् ।
चतस्रः ककुभः सौभरात् तासां द्वितीयातृतीययोश्चतुरक्षरं चतुरक्षरमुद्धृत्य
द्वे प्रथमायामुपदध्यात् ।
एवँ स विराट्प्रथमो गायत्र्युत्तरो वैतहव्यस्तोत्रीयः ।
अतिशिष्टानीतरस्यां ककुभ्युपदध्यात् ताँ षोडशिनः स्थाने निदध्यात् ।
चतस्रो नार्मेधात् तिस्रश्चोष्णिहः एकां चानुष्टुभम् ताँ षोडशिनः स्थाने
निदध्यात् ।
अतिशिष्टास्तिस्रः कौत्सस्य द्वे बृहत्यौ नौधसात् तथा कालेयात्
तासामेकाँ षोडशिनः स्थाने निदध्यात् ।
ताः सर्वाश्चतुस्त्रिँशदक्षराः सम्पद्यन्ते ।
अतिशिष्टास्तिस्रः सन्धेः स्थाने निदध्यात् ।
द्वे ककुभौ रथन्तरात् चतस्रो यज्ञायज्ञीयात् तासां द्वे द्वे
सन्धिस्तोत्रीयेषूपदध्यात् ।
एवमेताँ सषोडशिकाँ ससन्धिकाँ रात्रिं निर्मिमीते १०
ततः पृष्ठ्य ब्रूहीति ।
सवनेभ्यः पूर्वस्त्र्यहः षोडशिनश्चतुर्थँ रात्रेः पञ्चमँ सन्धेः षष्ठं
पृष्ठ्याच्छन्दोमान् ब्रूहीति ।
त्रिवृत्पञ्चदशयोः समासश्चतुर्विँशस्तत् सप्तमम्
सप्तदशत्रिणवयोश्चतुश्चत्वारिँशस्तदष्टमम् एकविँशत्रयस्त्रिँशाभ्यां
नवमदशमे सोऽष्टाचत्वारिँशं नवमे निधाय पञ्चदशषट्कानादत्ते ।

सर्वँ षोडशिनम् ते सप्तत्रिँशत्तृचाः तेषां चतुर्विँशतिमादाय
दशमस्याह्नोऽष्टावष्टौ पवमानस्थानेषु निदध्यात् ।
चतुराज्येषु तया पृष्ठेष्वेकम् अग्निष्टोमसाम्नः स्थाने तथा सार्पराज्ञे ।
त्रयस्तृचा अतिशिष्यन्ते ।
तान् प्रथमस्याह्न उक्थस्तोत्रीयान् ब्रुवीत ।
एवं तदुक्थ्यादुक्थ्यमभिसंक्रामति ।
त्रिवृतं पञ्चदशम् ।
एतां माहावृक्षी सम्पदित्याचक्षत आचार्याः ।
दशरात्रो महावृक्षस्तस्य ह्यग्रं गत्वा स्वर्गमनमुपपद्यत इति ।
नैषा सर्वस्मिन् दशरात्र उपपद्यत इत्यौपमन्यवः ।
त्रयस्तृचा अतिशिष्यन्ते ।
तानग्निष्टोमसँस्थ उक्थ्यस्तोत्रीयान् ब्रुवीत ।
अपरानुपच्छन्दोमेष्वेव ।
एषा सम्पत् सिध्यतीति ।
तदप्येवमिव ब्राह्मणं भवति--दृत ऐन्द्रोत इति होवाचाऽभिप्रतारी
काक्षसेनिः ये महावृक्षस्याग्रं गच्छन्ति क्व ते ततो भवन्ति । इति षडहं
महावृक्षमवोचत् ।
तस्य ह्यग्रं गत्वा त्रिवृत्पञ्चदशयोः पक्षयोः क्रियां दर्शयति ।
तदप्येवमिव ब्राह्मणं भवति--त्रिवृत्पञ्चदशावेव स्तोमौ पक्षौ कृत्वा
स्वर्गं लोकं प्रयन्ति । इति ।
तयोः समासश्चतुर्विँशः ।
तस्याष्टाचत्वारिँशो द्वादशातिशिष्यन्ते ।
तथा--दशमात् स चतुर्विँशो य एताः सम्पदो विदुः ।
ते पक्षिणः ये न विदुस्तेऽपक्षाः ।
तदप्येवमिव ब्राह्मणं भवति--ये वै विद्वाँसस्ते पक्षिणो
येऽविद्वाँसस्तेऽपक्षाः इति तेऽपक्षा इति ११

इति द्वितीयः पटलः

अथातो गवामयनम् ।
तदेक एकेनाह्नाभिविदधति ।
सर्वं ज्योतिष्टोमेनैके ।
अतिरात्रचतुर्विँशनवाहव्रतातिरात्रः इति कृत्वा ज्योतिष्टोमेनैव सँस्तृणन्ति ।
अत्रैधैके गोआयुषी दशरात्रमित्युपाहरन्ति ।
एतँ संवत्सरप्रवर्ह इत्याचक्षते ।
शङ्काहतमिति च ।
एतच्छातशूर्पो वार्षगण्य आसाञ्चक्रे ।
नानाऽहोभिर्वयं कल्पयामः ।
यथैतद् ब्राह्मणम्--अथ खलु य ऊर्ध्वं ज्योतिष्टोमदशाहाभ्याम् यज्ञक्रतवः सप्तभिः पर्यायैस्तेषु ज्योतिष्टोमानाञ्च दाशरात्रिकाणाञ्च द्रव्याणामागमो भवति ।
स्तोमान्वितानि स्थानान्वितानि पृष्ठान्वितानि तन्त्रान्वितानि भागान्वितानि सँस्थान्वितानि आशीःसप्रायाणीति रूपाच्छान्दसान्यायन्त्यपि च व्यावृत्त्यर्थानि ।
तत्रेह चतुर्विँशे यानि सप्तमात् स्तोमान्वितानि तानि ।
यानि स्थानान्वितानि तानि ।
यानि ज्योतिष्टोमात् पृष्ठान्वितानि तानि ।
यानि दशरात्रात् सर्वाणि रूपाणि क्रियन्ते इति तानि ।
यानि छान्दसान्यभिभवन्ति प्रवन्ति स्वस्त्ययनप्रवादान्युपक्रमेऽभिरूपाणीति तानि ।
तत् खलु बृहत्पृष्ठमपि रथन्तरं माध्यन्दिनं कुर्म उपक्रमणीयमहरिति ।
रथन्तरं द्वितीयं बृहद्ये के चोभयसामान इति ह स्माह शाण्डिल्यायनः ।
बृहत्पृष्ठास्ते रथन्तरमाध्यन्दिना आशयेनैव ।
अपिच स्वे सवने स्वे छन्दस्युभे वामदेव्योत्तरे भवत इति ।
चतुर्ऋचं होतुराज्यँ समामनामः ।
तासां चतुर्थीमुद्धरति ।

उद्वती भवति ।
अपरूपा प्रायणार्थे ।
अथाप्यस्याँ रणप्रवादो भवति ।
अपरूपा स्वस्त्ययनार्थे ।
अथ यत्रैतत् सर्वस्वारे भवत्येतां तत्र करोति ।
अथ खलु प्लवमन्वहं ब्राह्मणं सन्तन्नान्वहं कुर्मः ।
एवं च रहस्यब्राह्मणं दर्शयति ।
अपि शश्वद्ब्राह्मणमधीयते ।
ते वा एते प्लवातिप्लुता ये प्लवमन्वहमुपयन्तीति १२
उद्धरन्त्याचार्याः--त्रैककुभँ समानोदर्कयोनि ।
अपरूपं प्रायणार्थे ।
तत्रैतत् सौभरं पृष्ठान्वितम् ।
विकल्पो वा स्याद् ब्राह्मणचोदितत्वात् ।
अथ खल्वाह--सर्वाणि रूपाणि क्रियन्ते इति ।
तत्राचार्या एतेष्वेव द्रव्येषु सर्वान् स्तोमान् सर्वाणि पृष्ठानि सर्वा
विभक्तीश्च दशरात्ररूपाणीति भक्तिमात्रेणैव कल्पयन्ते ।
त्रिवृत्पञ्चदशौ चतुर्विँशः सम्पद्यते ।
पञ्चदशसप्तदशान् पञ्चैकविँशान् षडेव त्रिणवान् षट् त्रयस्त्रि-शान्
सर्वाणि पृष्ठानि बृहद्रथन्तराभ्यामुपाप्तानि ।
एतत्परोन्नाणि हीतराणि वामदेव्येन वैतस्माद्विसृष्टानि उद्वँशीयेन वा ।
एतद्धि सर्वेषाँ रूपमिति ।
अनिरुक्ता विभक्तयः ।
निरुक्तँ सर्वाभिप्रायम् वामदेव्येन स्वरविभक्तिः ।
पृथक् दाशरात्रिकेभ्यो द्रव्यागमँ सम्पश्येत् ।
उपवती प्रथमात् अग्रियवती द्वितीयात् दविद्युतवती तृतीयात्
सत्रासाहीयँ सस्तोत्रीयं चतुर्थात् ।
अथ खलु साकमश्वमुक्थप्रणयेऽकरिष्यत् ।
अतिरात्रे तत्कृतं भवति ।

तन्न समविचारयिषीत् ।
तत्रैतत् सत्रासाहीयं त्र्यहोपक्रमादुपक्रमेत् ।
बार्हताद् बार्हते ।
सोढवतीषु सोढवन्नामः ।
अथेदं कर्म सहेमहीति पार्थं पञ्चमात् ।
उद्वँशीयँषष्ठात् ।
यद्वा उद्वँशीयं तदुद्वँशपुत्रः । इति हि भवतीति ।
उद्वँशीयेनैव सर्वरूपावाप्तिमेके ।
बहु सप्तमात् ।
१ २ ३ १ २र ३ १
इन्द्रो अग्ना नमो बृहत् इत्यष्टमात् ।
समन्तदैर्घश्रवसे नवमात् ।
अभीवर्तः सस्तोत्रीयो दशमात् १३

अथ पञ्चमः प्रपाठकः

अथैषोऽभिप्लवः ।
तस्मिन् सारण्ये गेयं छन्दः क्लृप्तं बभूवेति शाण्डिल्यः ।
अर्द्धमेव प्राग् विषुवतोऽर्द्धमूर्ध्वँ सादित्यव्रतानि शुक्रियाणि विषुवतीति सतवश्यावीयानि सामानि व्रत इति समूहति ।
बार्हद्रथन्तरपृष्ठ्यादनित्याभिरनित्योऽयं षडह इति ।
अषाडहिकीरनित्या इत्याचक्षते ।
ते खलु शश्वद्भाल्लविनः स्तोत्रियात् प्रतिपदः कुर्वन्ति यथास्थानमेवानुरूपान् ।
अनुरूपान् वयं प्रतिपदः कुर्मः स्तोत्रीयाननुरूपान् ।
एवं यथोत्तरँ स्तोत्रीयानुरूपाणां प्रत्याहारो भविष्यतीति ।
षडहवशेन नानाप्रतिपदः समानं पर्यासम् एकाहवशेन तेन प्रच्युतं द्वितीयपर्यासं प्रथमेऽहन्यनुगृह्णाति ।
अथैतान्येव वैयूहिकान्याज्यान्युद्धृत्य गायत्राणि तद्विभक्तीनि प्रतिनिदधाति ।

त्रीणि त्रीणिधनानि करोति ।
त्रीणि ह्येव षडहेऽवधारितत्रिणिधनानि भवन्ति ।
तानि यत्र यथाकृतमभ्यस्यति ।
आयास्यं प्रायश्चित्तिसाम षष्ठेऽहनि चिकीर्षन् पार्थं द्वितीयस्य माध्यन्दिनं करोति ।
एतत् पुरस्तात् स्तोभं क्षत्रसाम बृहति पृष्ठेऽभिरूपम् तेन प्रच्युतमिहवद्वासिष्ठँ षष्ठेऽहन्यनुगृह्णाति स्वरविभक्तेरनुग्रहाय १
अथैते त्वाष्ट्रीसाम चान्धीगवं च तृतीयचतुर्थयोरह्नोर्व्यतिहरति त्र्यहयोर्व्यतिषङ्गाय ।
तत्र ता एव देवताविभक्तयः ।
अथ सामान्तविभक्तयः ।
एतेषामेव द्रव्याणां तल्लिङ्गाः कल्पयेत ।
पञ्चमे तु निधनविभक्तिर्न विद्यते ।
षष्ठे चेडाविभक्तिः ।
तत्राभ्यावारयन्ति--
बार्हद्गिरं वानुकल्पयेत् सौश्रवसं वा ।
उक्थानां ब्रह्मसाम कुर्यात् ।
गोष्ठं षष्ठे नु कल्पयेदिति ।
तस्य त्रिकद्रुकाः स्तोमाः षाडहिकानि तन्त्राणि ।
अस्ति हि षडहप्रवादः ।
अपि चैवँ रहस्यब्राह्मणे दर्शयति--ज्योतिष्प्रायणो ज्योतिरुदयनः षडहोऽभिप्लव इति चैतरेयिणाम् ।
ताँस्तु यदेवं प्रयुङ्क्ते एवं ज्योतिष्प्रायणो ज्योतिरुदयनः षडहो भवति यथास्थानमितराविति ।
तत्र यान्यैकाहिकानि द्रव्याणि स्तोमानि तानि ।
यानि षाडहिकानि तन्त्रान्वितानि तानि ।
यानि छान्दोमिकानि त्रयान्तानि ।
त्रयस्ते त्रय इमे लोकसम्मास्ते लोकसम्मा इमे बृहद्रथन्तरपृष्ठास्ते

बृहद्रथन्तरपृष्ठा इमे इति ।
रूपाच्छान्दसान्यायन्त्यपि च व्यावृत्त्यर्थानि ।
स्वादिष्ठां प्रथमस्याह्न आर्भवीयां करोति ।
या ह्येतस्यार्भवीया भवति न तस्या उत्तरेऽधीमहे ।
तस्याः शश्वन्माषशरावय उत्तरेऽधीयते ।
तां ते कुर्वन्ति आभीशवं चतुर्थे ।
नावमिकं कुर्यादिति धानञ्जय्यः ।
व्यावृत्तये पृष्ठ्याभिप्लवयोश्चातुर्थिकमेवेति गौतमः ।
एषैतस्याह्नः स्वरविभक्तिर्भवतीति भवतीति २
इति तृतीयः पटलः

अभीवर्त्तो ब्रह्मसाम इति ।
तस्य स्तोत्रीयविधिः--यदितः समानँ साम भवत्यन्योन्यः प्रगाथः इत्यत्यन्तनानात्वम् ।
य आस्तुतं कुर्वते यथा दुग्धामुपसीदेदेवं तत् इति प्रयुक्तप्रतिषेधः ।
तस्यान्ववायः--
पञ्चसु साःसु बार्हताः प्रगाथा आप्यन्ते इति ।
अथातः प्रगाथायनानि--
चतुःशतमैन्द्राः बार्हताः प्रगाथाः दशतयीषु तान् समामनामः ।
तेषां चत्वारोऽन्यत्रस्थाना बृहद्रथन्तरकालेयस्तोत्रीया अहरहः शस्यन्ते ।
इन्द्रक्रतुरौत्तरपञ्चिकः ।
शतमतिशिष्यते ।
तेषामेकं चतुर्विँशे कुर्यात् ।
नूनँ शतमतिशिष्यते ।
सप्ताशीतिः सतोबृहत्यः ।
ते एकोमत्रिँशत् सातोबार्हतास्तृचाः ।
तेषामिहैकविँशतिमाहरति ।
तद्विँशतिशतँ सम्पद्यते ।

विँशतिशतं पञ्चानां मासानामाभिप्लविकान्यहानि भवन्ति ।
तेष्वेतान् प्रगाथान् प्रयुञ्जीत ।
तृतीये तृतीयेऽहनि सतोबृहतीः कुर्वन्य एष पञ्चमस्य
मासस्योत्तमोऽभिप्लवस्तस्मिन् द्वे सतोबृहती कुर्यात् ।
तृतीयपञ्चमयोरह्नोर्न हि प्रगाथा अनुभवन्तीति ।
तत ऊर्ध्वं छन्दसी सँयुज्यात् ।
औष्णिहे तृच एकां गायत्रीमुपदध्यात् ।
सतोबृहत्यतिशेषँ समाप्येत्येव गौतमः ।
अष्टौ सातोबार्हतास्तृचा अतिशिष्यन्ते तान् प्रथमे चाभिप्लवे कृत्वा
द्वितीयस्य च द्व्याहे तत ऊर्ध्वं छन्दसी सँयुज्यादिति ।
चतुरुत्तरैरेव छन्दोभिरेतव्यम् इति ।
गायत्र्यां चतुर्विँशेऽभीवर्त्तं कुर्यात् ।
उष्णिहि प्रथम आभिप्लविके अनुष्टुभि द्वितीये ।
तत ऊर्ध्वं बृहत्या पञ्च मास इत्वा य एष पञ्चमस्य
मासस्योत्तमोऽभिप्लवस्तस्य पञ्चमेऽहनि पङ्क्तीः कुर्याट् अपि वा षष्ठे तत
ऊर्ध्वं त्रिष्टुभ्युत्तमे स्वरसाम्नि जगत्यामिति ।
अत्रापि सतोबृहत्यतिशेषँ समाप्येत्येव गौतमः ।
नव सातोबार्हतास्तृचा अतिशिष्यन्ते द्वौ च प्रगाथौ तान् प्रथमे चाभिप्लवे
कृत्वा द्वितीयस्य पञ्चाहे पङ्क्तीः षष्ठे वा तत ऊर्ध्वं त्रिष्टुभ्युत्तमे स्वरसाम्नि
जगत्यामिति ३
छन्दःसंयोगरूपोऽद्यविधिस्तत्स्थाने चातुरुत्तर्यम् ।
मासशब्दवैयर्थ्यमिति चेत् पञ्चसु माःसु इति यथा
पृष्ठ्यायनोऽपवादस्तल्लिङ्गेन दद्राणवतीवन्न च मासान्तर एतत्
कर्मास्तीति ।
एकदेशे यथा कालकृतौ लोके कृतमिति ।
बृहत्या चैव त्रिष्टुभा चैतव्यम् इति ।
त्रिष्टुभि चतुर्विँशेऽभीवर्त्तं कुर्यात् ।
बृहत्यां प्रथम आभिप्लविके त्रिष्टुभि द्वितीये ।

एवमनुपूर्वं छन्दसोः प्रयोगो भवतीति ।
तत ऊर्ध्वं व्यत्यस्येद् ।
बृहतीद्वय एव तन्मन्य इति शौचिवृद्धिः ।
बृहत्या पञ्च मास इत्वा य एते अष्टौ सातोबार्हतास्तृचाः अतिशिष्यन्ते ये चैते त्रयोऽन्यत्रस्थाना बृहद्रथन्तरकालेयस्तोत्रीयास्तैः षष्ठे मासि त्रिष्टुभो व्यत्यस्येत् ।
यदहः कालेयस्य स्तोत्रीयेऽभीवर्त्तं कुर्यात् ।
तरणिरित्सिषासति इति ।
कालेयमासञ्चारात् ।
यदहो रथन्तरस्य बृहत्स्तोत्रीये रथन्तरँ स्यात् ।
अपि वा स्वरसाम्नोरन्यतरस्मिन् रथन्तरस्तोत्रीयं कुर्यात् ।
अत्र ह्यन्यासु रथन्तरं भवतीति ।
अथ त्रयस्त्रिँशत् प्रगाथाः ।
तेषामेकं चतुर्विँशे कुर्यात् ।
सातोबार्हतं त्रयस्त्रिँशायनेऽभिप्रयुञ्जीत ।
अपि वा न सतोबृहतीराद्रियेत य एव चतुर्विँशे तमनुसँहरेदिति ४
एतेनैवोत्तराणि व्याख्यातानि ।
आ द्विप्रगाथाद् याथाकामी पुरस्तात् प्रगाथानां स्यात्
तथोपरिष्टादिन्द्रक्रतौ सामानि प्रकल्पयेत् ।
तावन्ति तच्छन्दस्यानि निधनवन्ति ।
यदि तच्छन्दस्यानि न विद्येरन्नपि वैछन्दसानि कुर्याद् यान्यभिरूपाणि स्युर्गीतितश्च निधनतश्च ।
कतम एषां कल्प इति ।
प्रथमौ प्रतिषिद्धावित्याहुः ।
अथेतरे सर्वे कल्पाः ।
अपि वा द्विप्रगाथमेव कल्पः स्याद् ।
दोषदर्शी नूनं पूर्वानत्यक्रमीदिति ।
ते कस्य हेतोः ।

षट्प्रगाथमयनँ समारप्स्यन्तीति ।
नेदँ षट्प्रगाथमिति शाण्डिल्यायनः ।
यः षट्प्रगाथं चिकीर्षेन्न सतोबृहतीराद्रियेत ।
य एव चतुर्विँशे तमनुसँहरेदिति ।
स खल्वयमभीवर्त्तः षट्प्रगाथानधितिष्ठति ।
पूर्वस्मिन् पञ्चसि द्वयोश्च सतोबृहतीः ।
एवमेवेन्द्रक्रतूत्तरे पञ्च प्रगाथिकानि द्वे सातोबार्हते विकर्णमष्टमम् ।
एवमनयोः समाधिरिति ।
अथैतत् सुज्ञानमौष्णिहमाविषुवतः सर्वत्र पृष्ठ्यपञ्चाहवर्जम् अतिरात्राच्च यथाकामकल्प्यत्वादेतेषामह्नामिति ।
एतदभिप्लवस्य राथन्तरेष्वहस्सु विचार्यते ।
पृष्ठे चैवमिव षडहे नानास्वस्त्ययनानि भवन्तीति ।
पृष्ठ्यमेव छिन्दन् व्यूहेत् समूहेदिति ।
व्यूढः स्यादिति शाण्डिल्यायनः ।
एवमस्यर्षिदर्शनं भवति ।
अथाप्येवं पुराणमाचार्यवच इति ।
समूढः स्यादिति धानञ्जय्यः ।
एष न्यायः ।
एवँ हि ज्योतिष्टोमः एवं दशरात्रस्य प्रथमस्त्र्यहः एवं दशमम्
एवमहीनैकाहा इति ।
अथापि समूढ एव पूर्वमुत्पन्नोऽपरो व्यूढः ।
एवँ हि रहस्यब्राह्मणे दर्शयति एवमिव ब्राह्मणं भवति छन्दाँसि वा ।
अन्योन्यस्य लोकमभ्यध्यायन्नित्युत्पन्नस्य लोको नाम भवति ५
अथापि विलुप्तो व्यूहः ।
षडहेन धि त्रिष्टुभः प्रतिपत्तां भजन्ते न जगत्यो माध्यन्दिनान्तान्न गायत्र्य आर्भवान्तान् ।
यत्रैव खल्वेतच्छन्दाँसि विप्रच्युत्य दशमेऽहनि सम्प्रकल्पन्ते तत एव व्यूहः सिध्यतीति ।

तदप्येवमिव ब्राह्मणं भवति--नर्ते छन्दोमेभ्य पृष्ठ व्यूहमानशः इति ।
अथापि समूढेन षडहेन सम्प्रयुक्तो भवतीति ।
तस्यैके प्रत्नवद् बहिष्पवमानं कुर्वन्ति ।
न ह्येता व्यूहकारिता इति ।
नवाहयोगा इमा भवन्तीति धानञ्जय्यः ।
कथमसमापयिष्यन्नवाहं नवाहयोगाः कुर्यादिति ।
तत्र नित्यावुपवत्ताविमावभिप्लवन्यायेन पार्थं द्वितीयस्य
माध्यन्दिनान्त्यमभिप्लवन्यायेन नित्याभिः समूहति--नित्योऽयं षडह
इति ।
तत्र तान्येव सामूहिकानि यान्यभिप्लवे ।
जनित्रमेवैतदन्यत् ।
तदेतत् स्वयोनिकामाः कारयन्तीति ।
कथं पृष्ठ्येऽभीवर्त्त इति ।
अकर्तव्य इति शौचिवृद्धिः ।
पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते इति ।
अन्यतः पृष्ठ्यादेवैषाप्तिः सिध्यतीति ।
कर्तव्य इति गौतमः ।
यत् सामावसृजेयुरवस्वर्गाल्लोकात् पद्येरन्निति हि भवतीति ।
पृष्ठ्ये वाऽस्यैतत् सतोऽवादीत् ।
नह्येनं केचनाभिप्लवाच्च्यावयन्तीति ।
तत्र बृहतीषु कालेयं द्वितीयमनुकल्पयामः ।
सन्तानरूपमस्मिन् भवतीति ।
कथमभिजितीति ।
अकर्तव्य इति शौचिवृद्धिः ।
कर्तव्य इत्येव गौतमः ।
तत् पृष्ठ्येनैव व्याख्यातम् ।
अथाप्येष एवं क्लृप्त एवैकाह आगच्छत्यभीवर्त्तमध्यन्दिन
इत्यभीवर्त्तमध्यन्दिन इति ६

## इति चतुर्थः पटलः

अथैते स्वरसामानः ।
तानग्निष्टोमानाह ।
नवाहकारिणः कुर्युरुक्थान् एकविँशत्यहःकारिणः ।
योऽन्यथा कुर्यादकुशलः पुरुष इति विद्यात् ।
अथैषां बृहत्स्तोत्रीया आनुष्टुभा एकबृहतीकाः ।
अनुष्टुभौ पूर्वे राथन्तरीयौ बृहत्युत्तमे ।
एतदेव विपरीतम् ।
द्वितीये चतुर्ऋचं तृतीयस्य भवति ।
तासां तृतीयामुद्धृत्य चतुर्थी तृतीयां कुर्मः ।
एषा बृहती भवति ।
अथ यत्रासु षोडशी साम भवति सर्वास्तत्रानुष्टुभो भवन्ति ।
तत्र खलु बृहद्रथन्तरे करोति स्वराणामेव पृष्ठत्वे निष्ठमानः ।
अथ स्वराणि ।
आनुष्टुभान्यनुष्टुप्स्विति ।
तत्र यान्येकाहिकानि द्रव्याणि पृष्ठान्वितानि तानि ।
यानि षाडहिकानि तन्त्रान्वितानि तानि ।
यानि छान्दोमिकान्यभिप्लव एव तानि व्याख्यातानि ।
क्षुल्लकवैष्टम्भं प्रथमेऽहनि करोति ।
दिगनुग्रहायाऽदिक्कमत्र स्वरं भवति ।
तेन प्रच्युतँ सँहितं तृतीयेऽहन्यनुगृह्णाति ।
पक्षयोः सन्तानाय विकल्पयन्ति अनुष्टुभो मध्ये
निधनान्यैडान्याजिघृक्षन्तः ।
स खलु विकल्पयन् स्वाराणयन्त्यानि कुर्यादविकल्पयन्नैडानि ।
विकल्पयन्तश्चोत हैके विकल्पयन्तश्चैडान्येव कुर्वन्ति ।
तृतीयसवनक्षात्रेण विकल्पयँस्त्वेव स्वाराणयन्त्यानि
कुर्यादविकल्पयन्नैडानि ।

वसिष्ठस्य प्रियं चतुर्थाद् याथातथ्यात् प्रत्याहरति ।
तैरश्च्यं वेति विचारयन्ति ।
उद्व꣡ꣳशीयार्थमिहानुगृह्णाति ।
आमहीयवं द्वितीयात्प्रच्युतं तृतीयेऽहन्यनुगृह्णाति ।
एतत् स्वयोनि भवतीति ७
अथैष विषुवान्--
तत्र खलु बृहद्रथन्तरे करोति शुक्रियाणामेव पृष्ठत्वे तिष्ठमानः ।
अथापि स्वर्गोक्तो विषुवान् तत्र स्वर्गोक्ते बृहद्रथन्तरे अचिकीर्षीत् ।
ते यत्पवमानयोर्निदधात्येतदेनयोरपयतोः स्थानं भवति ।
ते यद्बृहत्यां चानुष्टुभि चैतौ नेदिष्ठिनौ चातुष्पदावावापाविति ।
तत्र खलु गोस्तन्त्रं करोति ।
एतदन्ततन्त्रतरम् ।
अन्तविधोयं भवति मध्यचरः ।
तत्र यान्यन्तलक्षणानि मध्यलक्षणानि ज्योतिर्विधानि शान्तिविधानि शुक्रियसदृशान्यभिरूपाणि तानि ।
अथ खल्वत्रानुष्टुभः प्रतिपदः करोति ।
यथैतद्ब्राह्मणम्--उपवतीं वयं परमेऽहनि परमां प्रतिपदं कुर्मः ।
यान्यन्यानि बृहद्रथन्तराभ्यां पृष्ठानीति ह स्माह शाण्डिल्यायनः ।
उपवेत्येव तेषां कुशलेनोपोह्येव तानि बृहद्रथन्तरे इति ।
अथाप्यात्मोक्तो विषुवान् तं प्राणोक्तया गायत्र्या प्रत्यपित्सीद् दान्तोऽनादान्तमिति वा ।
२ ३ १ २
वात आ वातु इति माषशरावयः ।
३ १ २र
अग्निरिन्द्राय पवते इति शुङ्गाः ।
तस्या उत्तरे उपवती चाग्रियवती च ।
तत्रैके नाभीवर्त्तं कुर्वन्ति ।
पौर्वपक्षिकोऽयं भवति ।
अथाप्येव꣡ꣳ सुज्ञानेन समाधिरिति ।
मध्यन्दिने वयं कुर्मः ।

एवमिव ब्राह्मणं भवति--तावुभौ विषुवति कार्यौ इति ।
यद्वेतत् सुज्ञानेन समाधिरिति आर्भवचरं तद्भवति ।
नो पौर्वपद्विकमूर्ध्वं पृष्ठादचिकीर्षीत् ८
अथ खल्वाह--त्रिष्टुब् जगतीषु भवतीति ।
कस्येदं ब्राह्मणँ स्यादिति ।
पृष्ठाग्निष्टोमसाम्नोरित्याहुरेके कल्पाख्याते न भवत इति ।
अथाप्याहुः--त्रिष्टुभ एवेमा जगद्वृत्तयो भवन्तीति ।
अथाप्याहुः--त्रैष्टुभजागतादेवेमाः सूक्तादाहृता भवन्तीति ।
अथाप्याहुः--जागतमेवात्रैकं पदं भवतीति ।
अपि वा सम्पद एव ब्राह्मणँ स्यात् ।
अपि वा योनिवादश्च कर्मवादश्च स्याज्जागतँ हि सत् त्रिष्टुप्सु क्रियत इति ।
समसितव्यास्त्रिष्टुब्जगतीर्मन्य इति कौत्सः ।
त्रिष्टुब् जगतीषु भवतीति सति किमन्यत् समासादिति ।
आवृत्ते पृष्ठ्येऽभीवर्त्तलोके सामानि प्रतिकल्पयेदिति गौतमः ।
एवं च पद्मसोः समाधिः ।
अपि चैवँ ससामेन्द्रक्रतुरनुगृह्यत इति ।
तत्रैतेषामेव चत्वारि यान्यभिप्लवे वासिष्ठगौङ्गवे च ।
द्वितीयप्रथमयोरह्नोः शुद्धाशुद्धीयं वेति विचारयन्ति शाण्डिल्यः ।
एतदक्षरनिधनं भवतीति ।
नाद्रियेतेति शौचिवृक्षिः ।
तदभीवर्त्तेनैव व्याख्यातम् ।
अथापि नित्यान्येवाभिरूपतराणीति ।
इन्द्रक्रतुमस्तूयमानमनुशँस्त्रयन् सामानि प्रतिकल्पयेदिति गौतमः ।
जनित्रं विश्वजिति ।
यानि पृष्ठ्येऽभीवर्त्तलोके तानि दशरात्रिके पृष्ठ्ये ।
तेषां चत्वारि छन्दोमेषु यथाभागं यथापृष्ठं पौरुमीढं व्रतेन ज्ञात्रेण श्यैतं वा तन्त्रज्ञात्रेण एवं खलु कुर्यात् नवाद्रियेत आसामानमिन्द्रक्रतुमनुशँसयि-

तुमिति ९
अथोपदशरात्रँ सम्भरतां पूर्वे पक्षसि विचारो भवति ।
अतिरात्रचतुर्विँशे त्रीनभिप्लवान्पृष्ठ्यमिति कृत्वा पञ्चायनमासानुपेयुः ।
अभिजित्स्वरसाम्नो न त्रिँशत्तमामुपसम्भरन्ति ।
अथैतं दशरात्रमेक आवर्त्तयन्ति आवृत्तिसाधूत्तरं पक्ष इति ।
न वयमावर्त्तयामोऽनुपेतं पूर्वे पक्षसि तं कस्मादावर्त्तयामेति ।
अथापि नियुक्तमानसो भवति ।
यद् हैनमृते मानसादावर्त्तयिष्यद् दशमं च मानसं च व्यद्वेष्यत् ।
अपि चाकृतेन दशरात्रेण मानसमध्यशाययिष्यत् ।
स कस्य हेतोः ।
अकृतेन व्रतेन मानसमधिशाययतीति ।
व्रतसाम्बन्धात्प्राजापत्यं व्रतं प्राजापत्यं मनः सर्वाप्तिव्रतँ सर्वाप्तिमनः ।
तदपि शश्वत् सांवर्गजिता गौतमा उपरिष्टाद् व्रतस्य मानसमधीयते--
मा कृतेन व्रतेन मानसमधिशीयामेति ।
सामान्यात्तु वयमधिशाययन्तो मन्यामहे ।
अथैतान्यक्षिपन्त्यहानीत्याचक्षते ।
अतिरात्रचतुर्विँशे नवाहं गोआयुषी दशरात्रं
व्रतातिरात्रेऽक्षयणादनपक्रमणाद्वेत्यनपक्रमणाद्वेति १०

इति पञ्चमः पटलः

अथातः संवत्सरा वर्गाणाम् ।
पञ्च संवत्सरा वर्गाः ।
तेषु धीरो मनीषया कर्मण उपसदो विद्यात् ।
सँस्थाविधिषु व्रतानि च षड्त्रिँशोनो नवोनश्च षडहोनः ।
अथ साधनः--
अथाष्टादशभिर्ज्यायानहोभिः सावनात् परो नक्षत्रमितमासश्च ।
तस्य चैवं त्रयोदशी चान्द्रमसः सावनश्चोभौ ।
अथाष्टादश्युत्तमोऽष्टासप्तत्रिँशतं पौर्णमास्यां प्रसाधयेत् ।

गवामयनस्योपायाँश्चतुरः प्रतिपादयेत् ।
तेषां नाक्षत्रः प्रथमः तस्य सप्तविँशिनो मासाः सप्तविँशतिर्नक्षत्राणीति ।
तस्य कल्पः--
प्रथमस्य प्रथमस्याभिप्लवस्य स्थाने त्रिकद्रुकत्र्यहं कुर्यात् ।
प्राग्विषुवत उत्तमस्योत्तमस्योर्ध्वं विषुवतः ।
ते खल्वभिप्लवतन्त्र एव क्लृप्ताः स्युरित्येके ।
एते चेहाधिकृताः ।
न चापि निवर्तयति ।
अथापि दृश्यते--त्र्यहस्त्र्यहतन्त्रे क्लृप्तो यथा
स्वरसामानस्त्रिकद्रुकपञ्चाहश्चाभिप्लवतन्त्रे सप्तदशरात्रे स्वतन्त्रा इति ।
अपरमेवं च तन्त्राविलोपः ।
अपि च सत्रेषु त्रिकद्रुकत्र्यहः स्वतन्त्रो भवति ।
अथ नवोनः--
एतस्यैव त्रयोदश मासाः ।
सम्भार्ययोर्मासयोर्नवाहं लुम्पेत् ।
चतुरहमेव प्राग्विषुवतः पञ्चाहमूर्ध्वम् ।
तस्य कल्पः--
प्रथमस्याभिप्लवस्य स्थाने ज्योतिषं च गां च कुर्यात् ।
प्राग्विषुवत ऊर्ध्वं विषुवत उत्तमस्याभिप्लवस्य स्थाने ज्योतिषम् ।
नात्र विषुवानभिभवति ।
उत्तरे तु पक्षसि विषुवानुपसङ्ख्यायत इति ।
अथ षडूनः--
चान्द्रमसाः षट् पूर्णमासाः षडूनाः ।
पूर्णोपक्रमा ऊनावसानाः पूर्वे पक्षसि मासाः स्युः ।
ऊनोपक्रमाः पूर्णावसाना उत्तरे ।
तस्य कल्पः--
प्रथमस्य प्रथमस्याभिप्लवस्य स्थानेऽभिप्लवपञ्चाहं कुर्यात् ।
प्राग्विषुवत एतेषु मासेषूत्तमस्योत्तमस्योर्ध्वं विषुवतः ११

व्याख्यातः सावनः--
स एष आदित्यसंवत्सरो नाक्षत्रः ।
आदित्यः खलु शश्वदेतावद्भिरहोभिर्नक्षत्राणि समवैति ।
त्रयोदशाहं त्रयोदशाहमेकैकं नक्षत्रमुपतिष्ठत ।
अहस्तृतीयं च नवधा कृतयोरहोरात्रयोर्द्वे द्वे कले चेति संवत्सराः ।
ताश्चत्वारिँशच्चतुः पञ्चाशतं कलाः ।
ते षण्णववर्गाः सषट्षष्टित्रिशतः ।
षष्टित्रिशते श्लोकौ भवतः--
सप्तविँशती राष्ट्रस्य राज्ञो वसतयो मिताः ।
त्रयोदशाहमेकैकं नक्षत्रमुपतिष्ठति ।
त्रयोदशाहानि तृतीयमह्न-
श्चतस्त्रस्त्रेधा दशतयोऽपि कुर्वन् ।
त्रिणवं पन्थानं विततं पुराणं
चत्वारिँशता नवरात्रैः समश्नुते ॥ इति ।
अथाष्टादशभिर्ज्यायानादित्यसंवत्सर एव तैर्यगयनिको भवति ।
आदित्यः खलु शश्वदेकदा षण्मासानुदङ्ङेति नव चाहानि ।
तथा दक्षिणा ।
तदप्येते श्लोका भवन्ति--
यस्मिन् वै परिवत्सरे सौर्यो मासोऽथ चान्द्रमः ।
नाक्षत्रो न विलुप्यते ।
सप्तविँशतिमेवैषः सप्ताहानेति दक्षिणा ।
तथोदङ सप्तविँशतिमिति ।
तस्य कल्पः--
सम्भार्ययोर्मासयोरष्टादशाहान्युपाहरेत् ।
नवाहमेव प्राग् विषुवतो नवाहमूर्ध्वं त्रिकद्रुकाँश्चाभिप्लवं च प्राग्
विषुवतोऽभिप्लवं च त्रिकद्रुकाँश्चावृत्तानूर्ध्वं विषुवतः १२
कथमनाहिताग्नेः सत्रासनमिति ।
न विद्यत इति शाण्डिल्यायनः ।

सर्व इष्टप्रथमयज्ञाः पृथक् सत्रोपकरणानीष्ट्वा
समाप्याग्नीन्सत्रमासित्वोदवसायान्यानृत्विजो वृत्वा पृथक्
पृष्ठ्यशमनीयैर्यजेरन्निति नो विधानम् ।
यथा त्विदमद्य सत्रिणो भवन्त्यहीनयाजका इमे कृष्णाजिनकण्ठा भवन्ति ।
अथापि यः सत्रे करणाद् यजमानो मन्येत अपि नूनँ सोऽहीनैकाहेष्वपि
यजमानो मन्येत तत्र ह्यपि करोतीति ।
यदु वै यजमानशब्दाद् यजमानो मन्येत अपि नूनं ये यजामह
इतीष्टिपशुबन्धेष्वपि यजमानो मन्येत तत्र ह्यपि करोतीति ।
अथाप्याह--य एतेनानिष्ट्वा इति ।
तदेतदनाहिताग्नौ साधिष्ठमुपपद्यत इति ।
विद्यत इत्यपरम् ।
एवं च समारम्भः ।
अपि चैवँ सूत्राणि भवन्ति--
स्थालीपाकेनानाहिताग्नयो यजेरन्निति ।
अथापि दृश्यते पराग्निष्विज्या—यथा पुरोहितस्याग्निभिरश्वमनुचरन्तीति ।
तदपि शश्वद्ब्राह्मणं भवति--यथा पररथेनाध्वानमियादेवमेष स्वर्गं
लोकमप्येति यः पराग्निषु दीक्षित इति ।
अथापि ब्राह्मणं भवति--तेषां ये पुरोडाशिनः स्युरपि ह्यपुरोडाशिनो
भवन्तीति वार्थो भवति ।
एतेनानाहिताग्नीनाँ सत्रासनमुक्तम् ।
अथापि ब्राह्मणमेव भवति--तेषां ये पुरस्ताद्दिदीक्षाणाः स्युर्यद्यु वैषां
गृहपतिरिति ।
अपि ह्यदिदीक्षाणा एव भवन्तीति वार्थो भवति ।
एतेनानिष्टप्रथमयज्ञानाँ सत्रासनमुक्तम् १३

अथ षष्ठः प्रपाठकः

अथापि समाहारसिद्धिसत्त्रं भवति ।
तदेतत्समरूपमग्नयस्तावद्द्रव्याणि च ।

मन्त्रैर्वयमिति ।
अथापि यदेतच्छाण्डिल्यायनीयं गृहपतिस्तदातिगृह्णीते ।
अथ कः पृष्ठशमनीयः स्यादिति ।
याथाकामी पथ्यानां दक्षिणावतामिति वार्षगण्यः ।
अनारभ्य वदति तस्मादुदवसाय दक्षिणावता यजेतेति ।
अथापि पृष्ठशमनीयं नाम क्रतुमधीमहे ।
अथापि सारस्वतस्येष्टिरेव पृष्ठशमनार्था भवति--तथा
दार्षद्वततौरयोरिष्टिर्वा पशुर्वेति ।
ज्योतिष्टोम इत्यपरम् ।
अनादेशे कमन्यं प्रतीयाम ।
अथाप्याह--यामितदक्षिणैव स्यादेष एव कार्यः इति ।
अमितदक्षिणः खलु पृष्ठशमनीयो भवति ।
अथाप्येष सत्राणामाद्यन्तेषु दृष्टो भवति ।
अयमु खल्वन्ततम इति ।
अथाप्येष उच्चावचानामाहाराणामन्तेषु दृष्टो भवति ।
यथा चातुर्मास्येषु वाजपेये राजसूये संदँशवज्रयोरिति ।
यद्वेतत् सारस्वते दार्षद्वततौरयोरितीष्टिप्रायः स ह भवति ।
सुत्याप्राये तु ज्योतिष्टोम एवाभिरूपतर इति ।
तदपि शश्वद्ब्राह्मणं भवति--तस्मादुदवसाय ज्योतिष्टोमेनाग्निष्टोमेन
रथन्तरपृष्ठेन सहस्रदक्षिणेन पृष्ठशमनीयेन यजेतेति यजेतेति १

इति षष्ठः पटलः

अथात एकाहाः ।
तेषां यानि ज्योतिष्टोमानि द्रव्याणि तानि यान्यन्यान्युक्तान्वयानि तानि
बृहत्पृष्ठेषु ।
अन्यत् तन्त्रं करोति ।
बृहदेकाहेषु स्थानवच्चिकीर्षन् अस्य प्रत्नां माध्यन्दिनीयाम् एषा

सँरूपिता बृहतेति ।
यस्तेमदामार्भवीयाम् एषा बार्हतादह्न इति ।
अथ यत्र सार्वचिकीर्षा भवति परिस्वानां तत्रार्भवीयां करोति ।
तदाहुः--परिस्वानैवैतस्य तन्त्रस्य पुरार्भवीया बभूव ताँ
सानुर्वाराहिरपनिनाय आषडहमात्रो भवतीति ।
सैषा तयोर्वाक्सँहिता प्रोच्यते ।
अतो यान्यन्यानि द्रव्याणि बार्हतलिङ्गानि वा तानि भवन्ति
बार्हतेभ्योऽहोभ्योऽयँ सोम इति ।
माध्यन्दिनान्तीया बार्हतलिङ्गाः सूर्यवत्य आर्भवान्तीया
दशमादन्त्यान्विताः अन्तो हि बार्हत्पृष्ठ्यमिति ।
एतद् गोस्तग्रमित्याचक्षते--
अथ यत्र ज्योतिष्टोमे तन्त्रे बृहत्पृष्ठं तद्राजयज्ञेषु ।
वृषा शोणा भवति वृषा हि राजेति ।
व्रायस्तोमानां च ज्येष्ठयज्ञे राजजातीयत्वादेव ।
एतस्मिन्नेव तन्त्रे बृहत्पृष्ठे सूर्यवत्यः ।
न चेच्छन्दोमविलोपः उत्तमाद्वा पृष्ठात् ।
तदार्भवे स्तोमप्रत्यवरोहः प्राग्ज्योतिष्टोमविचारेभ्यः ।
एतयोस्तन्त्रयोः समासमुभयसामतन्त्रमित्याचक्षते--
प्रतिलोमममग्निष्टोमेषु अनुलोममुक्थ्येषु ।
अग्निष्टोमभक्तिर्हि स्वादिष्ठा उक्थ्याभक्तिर्यस्तेमदा ।
अथ यत्रैकर्चो माध्यन्दिनीया भवति
१ २ ३१ २३
इन्द्रायेन्दो मरुत्वते इति
तत्र करोति एषा सामान्या तृचप्रथमा मरुत्वतीति ।
अथ यत्रान्ये माध्यन्दिनीयार्भवीये भवतः कल्पसप्रायाणि च द्रव्याणि
तदाशीस्तन्त्रमित्याचक्षते ।
अथ यत्तदभिवादि द्रव्यं भवति यत्कामः क्रतुः तत्
कल्पसप्रायमित्याचक्षते ।
तदेतत् सार्वक्रतुकम् २

अथैतानि बृहद्रथन्तरयोर्विभक्तानि स्थानान्यपीतरेतरस्य तन्त्रं गच्छतोः प्रतिपदाज्यानि ब्रह्मसामौष्णिहमिति ।
अभीवर्त्तं तु राजयज्ञेषु भ्रातृव्यस्याभिवृत्त्यै भ्रातृव्यवान् हि राजेति ।
यत्र वोभयसामा सन् रथन्तरपृष्ठोमा नौधसेन बृहतः प्रत्याहारोऽभूदितीव यत्र वा प्रजापतिप्रवाद एकाक्षरणिधन एकः प्रजापतिः यत्र वाहर्गणस्य नाना ब्रह्मसामानि चिकीर्षति तत् प्रथमेऽहनि करोति अक्षरनिधनानां प्रथममायतनमिति ।
श्रायन्तीयं प्रायश्चित्तार्थेनैव भवति ।
अथ यत्रान्यदग्निष्टोमसाम भवति तद्यज्ञायज्ञीयमनुष्टुभि भवति एष नेदिष्ठे चतुष्पद आवाप इति ।
अथ यत्र श्यावाश्वं प्रच्यवते तद्रथन्तरपृष्ठेषु श्रुध्यं निहवानुग्रहाय व्रात्यस्तोमेषु च व्रात्यानामुपहवाय ।
अथ यत्र स्तोमप्रत्यवरोहस्तद् बृहत्पृष्ठेषु पौष्कलँ रोहदर्शनँ श्रुध्यँ स्तोमप्रत्यवरोहे न चिकीर्षति ।
विषमेषु स्तोमेष्वभिसोमा राथन्तरेषु परीता बार्हतेष्वेते राथन्तरबार्हते इति ।
तत्र गोआयुषोऽर्द्धे चतुर्ऋचस्थे कुर्वन्ति भाल्लविनः ।
चतुरस्तृचैकर्चान् व्यत्यासेन कालबविनः ।
अध्यास्यायामेकर्चौ अद एकस्यां प्रथमायाम् अदस्तिसृषु परासु अदस्तिसृषु पूर्वासु अदोऽध्यास्यायामिति शाट्यायनिनः ।
तृचप्रथमायां वयमेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थेऽध्यास्यायामन्तत एकर्चम् ताँ शशकर्णक्लृप्तेत्याचक्षते ।
इतरथोऽनाध्यास्यायां मध्य एकर्चावभितस्तृचौ यथैतदग्निष्टुत्यृषाभ इति ३
विभक्तावुक्थप्रणयौ प्रमँहिष्ठीयवन्ति राथन्तरेषु साकमश्ववन्ति बार्हतेषु उद्वँशीयान्तान्युभयेषां पङ्क्त्यनुग्रहाय ।
अथ यत्र चतुर्थो भागः प्रत्युपशेते नार्मेधं वा नार्मेधसदृशं वोक्थान्तेषु चिकीर्षितं भवति ।
अथैतौ विश्वजिदभिजितौ पृष्ठ्यपृष्ठ्यस्तोमयोरन्तस्य वेति शाण्डिल्यः ।

पृष्ठ्यस्तोमस्याभिजित् पृष्ठ्यस्य विश्वजित् पृष्ठ्यदशरात्रयोरित्येके ।
एतेनैवानुपूर्व्येण बृहद्रथन्तरपृष्ठमभिजितं पृष्ठ्यस्तोमन्यायेन
रथन्तरमग्निष्टोमसाम रथन्तरभक्तिरयं भवति पूर्वत्वात् ।
तद् बृहता नाध्यशिशाययिषीज्ज्योतिष्टोमं तन्त्रं पूर्वत्वात् ।
तत्र यान्यभिवन्त्यभिरूपाणि तानि जितिप्रवादानि ।
उभयोरभिजितोऽतिरात्री भवतः ।
ब्रह्मण आज्यमुद्धरति आर्षभस्तोत्रीयं मा सञ्चीचरन् इति ।
सञ्चारयेदिति धानञ्जय्यः ।
किँ हि योऽह्नो रात्रिमुपसञ्चारयेदिति ।
न सञ्चारयेदिति गौतमः ।
असञ्चारकुशला यज्ञा भवन्ति ।
तत्रैतत् करोति ।
अभि प्र गोपतिं गिरा
इत्यभिवतः स्थानेऽभिवत्सुज्ञानम् ।
उष्णिहि रथन्तरभक्तित्वान्न श्रुध्यं चिकीर्षति नो पौष्कलं बृहति पृष्ठे ।
तत्रैतत् करोति उभयभक्तिमिश्रनिधनँ सर्वपृष्ठं विश्वजितँ रथन्तरं
मध्यन्दिने बृहदग्निष्टोमसाम ।
एवमिव ब्राह्मणं भवति--यद्रथन्तरं प्रथमं बृहदुत्तमं मध्य इतराणीति ४
वैराजँ होतृषाम ।
एतद् बृहत् परोक्षाम् ।
एतच्चैषामेकनिधनम् ।
एकनिधनानि होतृषामाणि भवन्ति ।
महानाम्नी मैत्रावरुणसाम ।
एता अबुक्ता वामदेव्यस्थानेऽभिरूपाः ।
वैरूपं ब्रह्मसाम ।
एतत् सर्वबृहतीषु ।
सर्वबृहतीप्रायाणि ब्रह्मसामानि ।
एवं च स्वस्तोमानि भवन्ति ।

रेवतीरच्छावाकसामा अप्रदाहाय गायत्रीष्वग्निष्टोमसाम ।
एवमिव ब्राह्मणं भवति—यद्गायत्र्यो भवन्ति तेनाऽऽयतनान्न च्यवन्ते इति।
तासामेकवि<sup>ँ</sup>शत्यक्षरा प्रथमा ।
तेनैकवि<sup>ँ</sup>श्या न च्यवन्ते ।
कथं धर्मा इति ।
अकर्तव्या इत्येके ।
अस्वस्थानानि हि भवन्ति स्थानस्था धर्मा इति ।
कर्त्तव्या इत्याचार्याः ।
संयुक्तानि भवन्ति संयुक्तधर्मा इम इति ।
अथापि कृत्स्नान्वितान्याशीःसाधकतराणि भविष्यन्तीति ।
अथापि शिथिलानि प्रतिलोमानि परोक्षपृष्ठानि तेषां धर्मकरणेन
दृढीभावो भविष्यतीति ।
अथाप्यस्वस्थानानि तेषां धर्मकरणेन स्वस्थानानीति चिकीर्षा स्यादिति
।
अथापि विश्वजिच्छिल्प इत्याचक्षते ।
धर्माणामेतद्यच्छिल्पानीति ।
अथापि सँशयेऽलेपो लोपान्न्यायतर इति न्यायतर इति ५

इति सप्तमः पटलः

अथ कथमङ्गभूतस्य परिवासा इति ।
कर्तव्या इत्येके ।
विहिता अप्रतिषिद्धा भवन्तीति ।
अथाप्येवं पृष्ठधर्मैः समाधिरिति ।
अकर्तव्या इत्यपरम् ।
सर्ववेदससंयुक्ता भवन्ति ।
अपि चैते खल्वङ्गभूताः सर्ववेदसमिति ।
ते खल्वेते धर्मा एतस्मिन्नेव द्वादशाहे स्युरिति गौतमः ।
अत्र हि संवत्सराप्तिं वदतीति ।

ऊर्द्ध्वं द्वादशाहात् सांवत्सरिकाणीति धानञ्जय्यः ।
कामं तु छवी द्वादशाहिकी स्यादिति ।
बार्हत्तन्त्रं बृहद्भक्तित्वाद् यत्र कालेयं प्रच्यवतेऽनुजिघृक्षित्तं तत्र भवति ।
तद्यन्मध्यन्दिनेऽत्रास्य स्वच्छन्द इति ।
सत्रासाहीयं ककुभि सोढवन्नाम जितिनामखिति भवति ।
सफश्रुध्ये यद्यतिरात्र इति तु भवत्यतिरात्रः सन् कृत्स्नीभवति सफीभवति
तस्मात् सफीभवतः सफं वा विच्यावयिष्यत् ।
तदेक उक्थप्रणये कुर्वन्ति सोढवन्नाम मा प्रच्योष्टेति ।
पिपीलिकामध्यां करोति दशरात्रन्यायेन ।
तां नित्यायाः पुरस्तान्निदधाति ।
एवं पथ्यावसानमिति ।
तद्यत्र गणीचिकीर्षा प्रजापतिकामो वा एवमेवैष तस्मिन् स्थाने भवति ।
तत्र वामदेव्यं पृष्ठेभ्यः प्रच्युतमनुगृह्णाति वामदेव्यभक्तिन्यहन्युत्पन्नमिति ।
वारवन्तीयँ सर्वपृष्ठेषु चिकीर्षितं रेवतीसंयोगात् ।
तद्यद् द्विपदासु द्विपदाभक्तिन्यहन्युत्पन्नमिति ।
अनुतन्त्रमुक्थप्रणयौ नाना षोडशिसामनी करोति ।
नानात्वर्थो नानदमभिजितीति एतस्य पूर्वाभ्यर्थेनेति ६
अथ व्रतस्य स्तोत्रप्रदेशः--
पञ्चविँशतिस्तोभाः पञ्चकृत्वः पूर्वा देवता पञ्चकृत्व उत्तरा ।
अथाप्याहुः--व्यवस्तोभेत् पददैवतम् एवँसमाधिः पददैवतस्येति ।
एते वापि दैवते व्यवस्तोभेदित्येके ।
एवँ समाधिर्दैवतयोरिति ।
एते वाप्यर्द्धदेवते व्यवस्तोभेदिति शाण्डिल्यः ।
अथ कालबविनो यथासमाम्नायमेव कुर्वन्ति ।
एतच्चैषां लघिष्ठम् ।
अपि यान्यनुपदस्तुब्धानि आदर्शयतीति तेषामुभयतः स्तोभात् सकृन्निगदा
एवास्य पुरस्तात् स्तोभा भवन्ति ।
यत्त्वेनान् प्रथममवोचाम तत् कर्म ते खलु शश्वदेक आत्मना प्रतिपद्यन्ते

आत्मसत्तमान्यङ्गानीति ।
शिरसा वयम् शिरो वा अग्रे सम्भवतः सम्भवतीति भवति ।
अथैके शिरसा स्तुत्वा अथ दक्षिणेन पक्षेण अथात्मना अथोत्तरेण पुच्छेन
एवं मध्य आत्मा भवतीति ।
अथैके शिरसा स्तुत्वा अथात्मना अथ पक्षाभ्याम् अथ पुच्छेन एवँ
सम्यगवयवस्यानुक्रमश्च भवतीति ।
अथैके शिरसा स्तुत्वा अथ पक्षाभ्याम् अथात्मना अथ पुच्छेन
एवमिवाङ्गानामानुपूर्व्यमिति ।
अथ यथैतद् विहृत्य स्तवने तद्वयम् ।
एतद् ब्राह्मणवदित्यृश्यस्य साम्नि ।
किं प्रत्यक्षं किं परोक्षमिति ।
ह्रस्वं प्रत्यक्षं द्राघितं परोक्षम् ।
अपि वेन्द्रेति प्रत्यक्षम् इन्द्र इति परोक्षम् ।
अपि वा यथाग्राम एतदङ्गमाचष्टे तत् प्रत्यक्षम् तस्यैषा स्तुतिः स्यात् ।
तसरमिव ते पायुर्ऋजुरनास्कन्ध इति ।
यथा समाम्नायमेवोपेयुः ।
एवमिव ब्राह्मणं भवति--यद्वै मनुष्याणां प्रत्यक्षं तद्देवानां परोक्षम् ।
अथ यन्मनुष्याणां परोक्षं तद्देवानां प्रत्यक्षमिति ।
तत्कुशलं यदस्मिन्नहनि देवप्रत्यक्षं कुर्युः ।
तत्र खलु गोस्तन्त्रं करोति ।
एतदन्तं तन्त्रतरमन्तचरमिदं भवति ।
तत्र यो द्रव्यविकारो निर्वाकार्थे न सम्भवति ।
अथापि प्राजापत्यं व्रतम् अनिरुक्तः प्रजापतिरिति ।
अथाप्यन्नाद्यसँस्तावानि अन्नोक्तं व्रतमिति ।
स्तोमकल्पाय चतुर्ऋचमाहरति ।
१ २ ३ १ २
तद्यदेतद् यवंयवं नो अन्धसा इति
एतद्यवप्रवादं पुष्टिप्रवादम् ।
अन्नाद्यसँस्तावमन्नोक्तेऽभिरूपम् ।

जराबोधीयमुभयसामसु चिकीर्षितम् उभयविधनिधनं हि भवति ।
तच्चाग्नेययोन्यन्नाद्यसँस्तावमन्त्रोक्तेऽभिरूपम् ।
ऐकाहिकाद् व्रतात् पञ्चनिधनं वामदेव्यमपनयति नानाह्नामतिमेदनायेति भवति ।
तदेकाहे नोपपद्यते ।
यज्ञसामान्यादहीनेभ्यः तत्र श्यैतमनुतन्त्रम् ।
२ ३ १ २ ३ २ ३
आ नो विश्वासु हव्यम् इति ।
एता ब्रह्मप्रवादा इति ।
इलान्दमग्निष्टोमसाम कुर्वन्तस्तृचे कुर्युः ।
एष आवृत्तिन्याय इति ।
दशसु दशस्वक्षरेष्वार्चिकान्यनुगानानि ।
एवं वैराजान्यनुगानानि भविष्यन्तीति ।
षड्चे सर्वस्मिन्नित्याचार्याः ।
अर्द्धर्चेष्वनुगानानि एवमसँरोधतरो गीतानाम् । इति ।
द्वादशर्च इति शाण्डिल्यः ।
तत्रापरावाग्नेयौ तृचावाहरेत् ।
१ २
आ ते अग्ने
३ १ २र ३
अग्निं तं मन्ये ।
एवमृग्दृष्टीन्यनुगानान्यृक्षु भविष्यन्तीति ।
षड्चे तु कुर्वन्ति ये कुर्वन्ति
२ ३ २ ३ २ ३ २ ३
अग्ने तव श्रवो वयः इति ।
चतुर्थमेवानुगानं तृचे स्यादिति वार्षगण्यः ।
अत्र हि निधनवादं वदति--व्रतमिति भवति स्वरिति भवति शकुन इति भवतीति ।
भक्तयश्च कल्पन्ते नानासामवच्चैनान्येकेऽधीयत इति ७
अथ साहस्राः ।
त्रिरात्राप्तिं च व्रताप्तिं चोपकृताः ।

एवमिव ब्राह्मणं भवति--तत्र त्रयाणाँ सम्पद् ब्राह्मणचोदिता ।
तदुपकृता एते स्तोमा भवन्ति ब्राह्मणविहिताः ।
तृतीयस्योभे सामनी करोति--व्रतन्यायेन त्रिरात्रन्यायेन च ।
व्याख्यातमौभयं तन्त्र्यम् ।
पूर्वयोः पङ्क्तिषु ब्रह्मसाम यत् सहस्राक्षरासु ब्रह्मसामेति ।
एवमक्षरसहस्रँ सम्पद्यते ।
बार्हतं तन्त्रं तृतीयस्योक्थ्यत्वात् ।
३ २ ३१ २ ३
अग्निं दूतं वृणीमहे इति ।
उभयान्याज्यानि ।
तत्र पूर्वे बार्हत उत्तरे राथन्तरे इति शौचिवृक्षिः ।
एवँ समविभागो देवतानामिति ।
एकदेवत्ये बार्हते द्विदेवत्ये राथन्तरे इति धानञ्जय्यः ।
एतद् द्वयोः समवयतोः कुशलं यद्व्यत्यास इति ।
व्याख्यातँ श्रायन्तीयम् ।
अपि चैकादशाक्षरशतानि सम्पद्यते ।
तत्र नित्या सहस्रसम्पत् मौक्षमुक्थ्येषु चिकीर्षितम् उक्थ्यदर्शनं च ।
अपि च त्र्यक्षरणिधनं त्रीण्युक्थ्यानीति ।
सौभरं त्रैककुभं वेति विचारयन्ति ।
नित्यं हि सौभरँ श्रायन्तीयनियोगात् उद्वँशीयनियोगाद्वा त्रैककुभमिति ।
त्रिरात्रविध उत्तमः त्रिरात्रिक्यः प्रतिपदश्चाज्यानि च ।
एष्वत्रैरात्रिकम्--
२ ३ २ ३ १ २ ३१
इन्द्रमिद्गाथिनो बृहद् इति ।
तद्यत्करोति पृष्ठमप्यविभाजयिषीत् ।
ज्यौतिष्टोमं तन्त्रम् विभ्रँशाशङ्कस्त्रिरात्रे ।
एतत् प्रतिष्ठाविधतरं तन्त्रयोरिति ।
ककुभं माध्यन्दिनमुपाहरति ।
इमामुपरिष्टाद् गायत्र्या निदधाति ।
एवमियममुत्र गायत्र्यानन्तर्हितेति ।

तस्याः स्थाने द्विपदां करोति पुरुषच्छन्दसः पुरुषच्छन्दस इति ।
सतोबृहतीं करोति ।
त्रिरात्रन्यायेन तां नित्यायाः पुरस्तान्निदधाति ।
एवं पथ्यावसानमिति ।
तद्यत्र गणीचिकीर्षा प्रजापतिकामो वा एवमेवैतानि छन्दाँसि युज्यन्ते ।
आष्टमिकीस्त्रिष्टुभः करोति ।
एता रूपसम्पन्ना इति ।
तत्र वामदेव्यं करोति ।
एवं हि ब्राह्मणं भवति--पवमानस्यान्त्यं वामदेव्यम् इति ।
स्वारँ सौपर्णं मैत्रावरुणसाम एतद् वामदेव्यसदृशम् ।
अपुरस्तात्स्तोभं बहिःस्वारं यथा वामदेव्यम् ८
अथ साद्यस्क्रेषु याः सद्यःप्रवादा नवप्रवादाः प्रोक्तवत्यो जनद्वत्यस्ता अभिरूपाः ।
अथ खल्वत्र पृष्ठन्यङ्गाश्चिकीर्षिता भवन्ति ।
आमहीयवान्ततो तदृतुप्रत्ययानि पृष्ठानि परिवाचनार्थानि तानि ।
यन्न साक्षादस्वस्तोमान्यभविष्यँस्तत्रैतच्छाक्वरवर्णँ शक्वरीभ्यः प्रतिवैष्टम्भं वैरूपात् साक्षाद्रथन्तरं क्रियते ।
सौभरं बृहतो वारवन्तीयँ रेवतीभ्यः स्वाशिरामर्को वैराजादायास्यमुष्णिहि ।
मध्यन्दिने स दक्षिणां प्रतिगृह्य विभ्रँशे स तृतीयसवने प्रायश्चित्तं चक्र इति ।
कथमुत्तरयोः साद्यस्क्रधर्मा इति ।
कर्तव्या इत्येके ।
साद्यस्क्रैश्चाभिपरीतौ भवतः ।
अपि चैते कालसङ्कर्षाद् भवन्ति ।
सङ्कृष्टकालाविमौ भवत इति ।
अकर्तव्या इत्यपरम् ।
असाद्यस्क्रौ हि भवतः ।

यद्वेतदभिपर्ययादिति सर्व एवासाद्यस्क्रैरभिपरीता भवन्ति ।
यद्वेतत् कालसङ्कर्षादिति उच्चावचाः कालविप्रकर्षा एकाहानाम् तदेवं बहु प्रसज्येतेति ।
विश्वजिच्छिल्पे सामस्तोमे सति साध्यासां बृहतीं करोति ।
कस्य हेतोरिति ।
पुरस्तादापन्नानि वैश्वजितान्यचिच्यावयिषन्नचिच्यावयिषन् ६

इत्यष्टमः पटलः

जिघाँसद्यज्ञ उत्तरः ।
तत्र या हतवत्यः क्रूराणि च सामान्यभिरूपाणि तानि ।
त्रिकाण्याज्यपृष्ठानि करोति ।
एवँ सुपराञ्चि भवन्ति ।
वज्रोक्तं च पञ्चदशमभिसम्पद्यते ।
चतुरः पञ्चदशान् ।
अर्षा सोम द्युमत्तमः इति माध्यन्दिनीयं भवति ।
आहेयं भवतीति शाण्डिल्यायनः ।
ऋषव्युषेत्यर्थात्तु स्नातकाः कुर्वन्ति ।
भागविलोपे चोत्पन्ना भवतीति ।
पराचीषु रथन्तरम् इति ।
द्विपदोत्तरासु स्यात् ।
एवँ सुपराग् भवति ।
ककुभावेवेति गौतमः ।
अनभिवर्त्तस्यैतद् ब्राह्मणमिति ।
पवमाने रथन्तरम् इति उद्धृत्य बार्हतानि स्यात् ।
अष्टेडश्च पदस्तोभः शाक्वरवर्णस्य त्रिणिधनानुग्रहाय शक्वरीणां च ।
पवमानान्त्यं वा रथन्तरम् तज्जामि ।
एवमिव ब्राह्मणं भवति--यद्वै महावृक्षौ समृच्छेते बहु तत्र विभग्नं प्रभग्नँ शेते । इति ।

यद्यु वाजामि यौधाजयस्थाने दैर्घश्रवसं यदन्तरा सोमायन्तीति ।
उपरिष्टादनुद्धरन् वा बार्हतान्यनुकल्पयेत् ।
तत्र पौरुमद्गं तृचसमाप्तये भ्रातृव्यवधꣳ ह्यस्मिन् ब्राह्मणं दर्शयति ।
इति ।
यौधाजयं वोत्सेधमध्यं कृत्वा पवमानान्त्यꣳ रथन्तरम् ।
आन्धीगवनिषेधो वृत्तिग्रहणात् ।
वामदेव्यꣳ सर्वाभिवादनार्थमिति धानञ्जय्यः ।
प्लवश्चेद् ब्रह्मसाम स्यात् ।
१ २ ३ १ २
त्वमिन्द्र प्रतूर्तिषु इति ।
एतास्वेता रूपसम्पन्ना इति ।
श्यैतीयासु वा बृहत्पृष्ठत्वात् ।
अथैष एकत्रिकः प्रजापतीपसामुपकृतः ।
तत्रैतावुत्सेधनिषेधौ ।
प्राजापत्यादह्नो निषेधः ।
ब्रह्मसाम श्रायन्तीयस्यर्चि एषा श्रितवती प्रायश्चित्तकृत्येभिरूपेति ।
अतो यो द्रव्यविकारः प्रजापतीप्सया स भवतीति १०
अथ व्रात्यस्तोमाः ।
तत्र षोडशाशीःस्तोमः ।
स एष द्वात्रिꣳशो विकृतः ।
तमच्छावाकसाम्नो निदधाति ।
एतदानुष्टुभं स्थानमिति ।
अनन्तरा द्वात्रिꣳशप्रयुक्तिर्भविष्यतीति ।
पवमानयोर्ज्योतिष्टोमानीतराणीति ।
तत्र या वीर्यप्रवादा बलप्रवादा द्रविणप्रवादाः शुचिप्रवादा निषण्णवत्यः
पविताभिव्याहारा अभिरुपास्ताः ।
यानि च गणसामानि निभृतवन्ति तत्र यश्छन्दोयोगविकारो
गणीचिकीर्षया स भवति ।
अपि च क्षुद्रीचिकीर्षया ।

अथ खल्वाह--यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवर्ध्नुयादपेतर आर्ध्नीत ।
इति ।
कस्येदं ब्राह्मणँ स्यादिति ।
नौधसप्रतिषेध इत्याचार्याः ।
तद्धि निरुक्तनिधनं भवति नेदमिति ।
अथापरम् आ इन्द्रा इत्येवास्य निधनं निराहुः ।
तद्यत्तथा स्यात् तन्निरुक्तँ स्यादिति ।
यथा समाम्नायं चैव ।
एवमनिरुक्तमिति ।
द्वावग्निष्टोमस्तोत्रीयौ समामनामः ।
दये व्रात्या भवन्ति--शीर्षादयश्चैषीकपावयश्च ।
शीर्षादीनाँ सतोबृहतीष्वग्निष्टोमसाम कुर्यादिति धानञ्जय्यः ।
ज्यायसस्तान् ब्रुवते--ऐषीकपाविनां प्रगाथबृहतीषु केनो विद्यादिति ।
स्वयं प्रब्रुवीरन्निति ।
ज्यायाँसः खलु शीर्षादयो ब्रुवते ।
षड् षोडश्युत्तरस्तं खलूक्थ्यं करोति ।
षोडशयोः स्थाने चिकीर्षँस्तावाद्यवसानयोर्निदधाति ।
एवँ समाधिः पवमानाच्छावाकसाम्नामिति ।
कनिष्ठयज्ञ उत्तरः ।
ये तु खलु जन्मना कनिष्ठा ये हो वयसेति ।
ये जन्मनेत्याहुस्तान् कनिष्ठा इत्याचक्षते ।
अथाप्याहुः--ये वयसा सखिचारिणो हि व्रात्या भवन्तीति ।
व्याख्यातौ षोडशावच्छावाकसाम्नोः उद्धरति श्रुध्यँ स्तोमसँरोधात् ।
तत्र मरुताँ सँस्तोभं करोति ।
आशीःस्थानं मा प्रच्योष्टेति विहरति श्यावाश्वान्धीगवे ऋचा वीप्सन् ११
ज्येष्ठयज्ञ उत्तरः ।
ये तु खलु जन्मना ज्येष्ठा ये हो वयसेति तत् पूर्वेणैव व्याख्यातम् ।
तत्र दाशरात्रिकाँश्च स्तोमान् उभे च सामनी करोति ज्येष्ठयज्ञं

कृत्स्नीचिकीर्षन् ।
अथापि द्वात्रिँशमाशीः स्तोमँ साक्षाज्ज्येष्ठयज्ञेऽचिकीर्षीत् ।
स आदीयमानः सर्वान् स्तोमानादापयेत् ।
ताँस्तु यदेवं प्रयुङ्क्ते एवमनन्तरेण रोहो भवति ।
अष्टाचत्वारिँशात् परस्तादन्तरिताविति त्रिणवत्रयस्त्रिँशौ ।
अभिरूपोऽन्ते द्वात्रिँशो वा चिकीर्षन् ।
कनीयाँसौ स्तोमावुपागुः इति नु भवति ।
त्रयस्त्रिँशद्द्वात्रिँशावितीवैतद् भवति ।
द्वे त्रिणवत्रयस्त्रिँशे द्वे द्वात्रिँशत्रयस्त्रिँश इति वा खलु तत् कुर्युः
सर्वान्वै वरूथानुपेयुरिति ।
अकुशलाऽनुव्याहृतान् कौषीतकीन् मन्य इति धानञ्जय्यः ।
एवँ ह्येवैषु सत्सु रोहो भवति ।
तत्र यो रोहोऽर्थकारितः स भवति ।
कथमनिष्टप्रथमयज्ञानां व्रात्यस्तोमा इति ।
अकर्तव्या इत्येके ।
अनारभ्य घदति--य एतेनानिष्ट्वा इति ।
अथाप्येषां ज्योतिष्टोमे प्रतिपद् विधीयते ।
अथापि यथा नानाहिताग्नीनामेवमनिष्टप्रथमयज्ञानामिति ।
कर्तव्या इत्यपरम् ।
प्रायश्चित्तार्था इमे भवन्ति ।
प्रायश्चित्तमु खलु पूर्वं विधीयते ।
अथापि ज्योतिष्टोम एव प्रायश्चित्तस्य पूर्वत्वं दर्शयति यथा कलशे दीर्णे
विरिक्ते सोमग्राव्णि विशीर्ण इति ।
यद्वेतत् य एतेनानिष्ट्वा इति प्रकृतिभूतानामेतद् भवति ।
यद्वेतत् प्रतिपद् विधीयत इति इष्ट्वा व्रात्यस्तोमेनेत्येतदुपपद्यते ।
तद्वेतत् तद्यथा नानाहिताग्नीनामिति सिद्धिकारितमेतद् भवति १२
अथाग्निष्टुत्सु या आग्नेय्यः पावकाभिव्याहारा ज्योतिष्टोमीभिः
सदृशव्यञ्जना यथास्थानमभिरूपास्ताः ।

रुद्रवतीस्त्रिष्टुभः करोति ।
रुद्रो मरुतां पितेत्याहुः ।
तेन मरुत्वदनुग्रह इति ।
गायत्रीष्वग्निष्टोमसाम ।
एतदाग्नेयच्छन्द इति ।
स यदेताः
१ २ ३ २ ३ २ ३
उप त्वा जामयो गिरः इति
एता वायव्या इति ।
तत्र वारवन्तीयं गायत्रीसाम ऐडमृचा स्तोत्रीयम् ।
तेन प्रच्युतं यज्ञायज्ञीयमन्यं करोति ।
अत्र हि स तृचतां लभते ।
तदेतत् स्तोमसँरोध एवमेव भवति ।
ऐन्द्रीषु परेषां करोति ।
ऐन्द्री सुत्येति ।
सोऽयं पूर्वः सर्वाग्नेयः ।
एकस्तोत्रं चिदैन्द्रं भविष्यतीति ।
स यदग्निष्टोमसाम अन्तारव्यानि कर्माणीति ।
सप्तदशे विषमे स्तोमे सत्यनध्यासां बृहतीं करोति ।
कस्य हेतोरिति ।
न ह्याग्नेयी साध्यासा विद्यते ।
तस्यां चत्वारि सामानि ।
तृचावभित एकर्चौ मध्य एवं तृचप्रायणम् तृचोदयनं भविष्यतीति ।
त इमे पञ्चानुवाकाश्चत्वारः कल्पाः ।
स एष प्रथमः सर्वेषामेव सार्ष्टः स्यात् ।
अपि वा प्रथमस्य द्वौ स्याताम् ।
कथं भक्त्या इति ।
आग्नेया इत्येके ।
एवं यथार्थं भवति ।

अथाप्यत्र सुविप्रतिषिद्धरूपारयनाग्नेयानि भवन्ति ।
आग्नेयानि यथा हविःस्तुतिः पवमाना इति ।
यथाप्रकृतीत्यपरम् ।
भक्ष्यविशेषान् विदधन्नाग्निष्टुत्सु विदधाति ।
अथापि कृतावेवायथार्थं भवन्ति ।
यथा मैत्रावरुणाज्येऽग्निष्टोमसाम्नीति ।
उत्तरेष्वग्नय इति स्थाने सुब्रह्मरयायां देवा इति ब्रूयात् ।
ऐन्द्रत्वादग्निष्टोमसाम्न इत्येके १३

अथ सप्तमः प्रपाठकः

अथ त्रिवृतः ।
तेषां यो द्रव्यविकारो निर्वाकार्थेन स ह भवति ।
पुरोधाकामयज्ञ उत्तरः ।
स्थपतिसवो वायम् समानाः श्रैष्ठ्ये संवृणीरन् ।
ब्रह्मसवो वा ब्राह्मणस्य यज्ञेन जिजनिषमाणस्य त्रिवृतः स्तोमꣳ सम्पद्यते ।
लघुरीप्सायामभिरूपोऽग्रस्तोमश्च अग्रमेष गच्छति यः पुरोधां यः
स्थापत्यम् यस्य तु स्याद् ब्रह्मसव इति ।
एषा ब्रह्मणो भक्तिरिति ।
अनुसवनं दक्षिणा ददाति ।
कस्य हेतोरिति ।
बृहस्पतिरभिषिच्यमानो देवगणेभ्यो दक्षिणा आजहार ।
वसुभ्यः प्रातःसवने रुद्रेभ्यो माध्यन्दिने सवने
आदित्येभ्यस्तृतीयसवनेऽश्वद्वादशा माध्यन्दिने ददाति ।
दक्षिणा वेलायामन्याधित्सन् मन्यते ।
श्येनेनेषोर्द्रव्यसमुद्देश उक्तः ।
उद्धरति शाक्वरवर्णम् ।
साद्यस्क्रसाम तद् भवति ।
तत्रैतज्जरावोधीयमेतद् गायत्रीसामापन्नम् ।

ऋपि च रुद्रवद्योनिवधार्थेऽभिरूपम् ।
उद्धरति वषट्कारनिधनम् तस्य स्थाने सप्तहङ्करोति ।
एतद् बृहता समानयोनिवधार्थेऽभिरूपम् ।
उद्धरति बृहत् तस्य स्थाने वषट्कारनिधनम् ।
एषा देवेषुर्भवति ।
तामाशीःस्थान ईप्सन् १
सर्वस्वारे सप्तर्चनवर्चान् करोति एते प्राणोक्ता इति ।
तेषां विलोपेन प्राणविलोपो भविष्यतीति ।
स यत् प्रथमाँस्तृचान् एते रूपसम्पन्ना इति ।
चतुर्ऋचमैन्द्राग्नँ समामनामः ।
प्रवत्यासां द्वितीया तामुद्धरति सर्वाः प्रवत्यो भविष्यन्तीति ।
गायत्रीणां पृष्ठापदानाद् बृहतीषु मैत्रावरुणसाम करोति त्रिस्थानां बृहतीं पृष्ठेषु चिकीर्षन् ।
तत्रैकं मैधातिथँ स्वयोन्यापन्नम् ।
पुरस्तादेतत् स्थानम् ऋभिवतीषु होत्रिकपृष्ठानि स्वयोनीनि चिकीर्षन् ।
पराग्वृहतीष्वग्निष्टोमसाम परागनुप्रहरतेति ।
ता यदावर्त्तयति एवं प्रवत्या प्रक्रम इति ।
तत्र यज्ञायज्ञीयमन्तसमाधये ।
तस्याद्वरसँसङ्गेन प्रस्तावयति प्रगाथीकाराय पूर्वस्याश्चान्त्यं मेयायाश्चाद्यम् ।
एषोऽद्वरसँसङ्गः ।
तद्यत्र यत्रैतेषां तृचापत्तिर्बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चैवमेतेषां प्रस्ताव-यति ।
दैर्घश्रवसँस्वासु यदि जीवेदिति तु भवति न चेदशकन्मर्तुमुत दीर्घँ शृणुयादिति ।
ऋपि वा प्रायणार्थमेव स्यात् ।
स्वारं च गवति प्रवद्योनि चेति ।
ककुबुत्तरासु ककुबुत्तरास्थानँ हि सर्वबृहतीष्वेके ।

एवं स्वर्गकामयज्ञे ।
अपि वा स्वर्गोक्तां बृहतीं स्वर्गकामयज्ञेऽचिकीर्षीत् ।
पुरस्तान्नानाबृहत्य इति वा ।
तन्त्रे विप्रतिपद्यन्ते ।
ज्योतिष्टोममित्येके ।
गायत्रीभ्यां जानीम इति ।
आशीस्तन्त्रमित्यपरम् ।
प्रघतीभिरयं क्लृप्तः ।
ता एताः प्रवत्य इति २

इति नवमः पटलः

अथातश्चातुर्मास्यानि ।
स एष षडहो विहृतः ।
तत्र षाडहिकान् स्तोमान् करोति षडहन्यायेन ।
ताँस्तु यदेवं प्रयुङ्क्ते एवँ रोहो भवति ।
अथापि नानादीक्षावभृथानीमानि पर्वणि भवन्ति ।
तत्र सर्वाण्यहान्युपक्रमः ।
स्तोमेन प्राचिक्रमिषीत् ।
अथाप्येवमेनाननवच्छिन्नानन्ततोऽध्यवस्यतीति ।
अवयन्ति तन्त्राणि पृष्ठानि सँस्था इति ।
अह्नां व्युत्क्रमादेकाहिकान्येकाहे द्वैरात्रिकाणि द्विरात्रे ।
उद्धरति रात्रिमपरिकाण्डतया द्व्यहस्य ।
त्रैरात्रिकाणि त्रिरात्रे ।
उद्धरति वामदेव्यं चास्य प्रत्नं चापरिकाण्डतया त्र्यहस्य ।
नाना ब्रह्मसामानि नानात्वार्थं श्यैतनौधसवर्णानीति ।
बार्हद्रथन्तरपृष्ठ्याद्यौक्तस्त्रुचमेवादाशरात्रिकम् ।
तदेतदपूर्णदर्वानुग्रहाय ।
३ २ १ २ ३
शग्ध्यू३षु शचीपते इति ।

प्रथमस्याह्नो ब्रह्मसामस्तोत्रीयो वैश्वदेवस्यायँ स्थानमापन्नः एषा विश्ववती भवतीति ।
पञ्चप्रतिपत्कान्यहानि ऋृत्वभीज्यायाम् पञ्चर्तुः संवत्सर इति ।
षरणामह्नां प्रतिपदः षड्तुः संवत्सर इति ।
त्रिष्टुभं वैश्वकर्मणिकं करोति ।
न हि गायत्री विद्यते ।
समापद्यन्ते त्रिरात्रे भागाः तदनु द्रव्याणि ।
हाविष्मतं द्वितीयेऽहनि त्रिरात्रस्य कुर्यादिति धानञ्जय्यः ।
ऋृद्धिसाम मा प्रच्योष्टेति ।
यौक्ताश्वमेवेति गौतमः ।
कृतँ हाविष्मतं द्विरात्रे ।
तृतीयस्थानं च हाविष्मतं त्रिरात्रे ।
तत्रैतत् सँहितँ शुनाशीर्यँ सन्तानाय
१ २ ३ १ २र ३
स सुन्वे यो वसूनाम्
३ १ २र ३ १ २
प्राणा शिशुर्महीनाम् इति ।
पञ्चमषष्ठाभ्यामुष्णिक्ककुभौ षडहं समीप्सुः प्रत्याहरति ।
एतेन न्यायेन त्रिरात्रप्रभृतिष्वहर्गणेष्वेते भवतः ।
न चेत् कृतागमो भवति ।
द्विपदातिच्छन्दसो दशरात्रन्यायेन ते जगत्याः पुरस्तान्निदधाति ।
अन्तच्छन्दसी अन्त इति तेऽयं न सर्वान्ते नासवनच्छन्दोऽन्तेऽचिकीर्षीत् ।
३ २ ३ १
तत्रैता वाजदावर्योऽन्तान्विताः--अया रुचा इति ।
नित्यवत्सा स्वयोनयः ।
एतेन न्यायेन त्रिरात्रप्रभृतिष्वहर्गणेष्वेते भवतः ।
न चेत् स्तोमसँरोधो भवति ३
अथैते सप्तदशाः ।
तत्र बार्हतेष्वाष्टमिकं पञ्चर्चं करोति एतद्भक्तिनोह्न इति ।
तार्तीयकं रथन्तरपृष्ठेषु एतद्रथन्तरभक्तिन इति ।
अनिरुक्तः प्रथमः ।

तत्र यो द्रव्यविकारो निर्वाकार्थेन स भवति ।
अथ खल्वाह--मारुती भवति पौषी भवति वैश्वदेवी भवति इति ।
केनो विद्यादेतद्देवत्या इमा भवन्तीति ।
एत्तद्देवत्येषु सूक्तेषु समाम्नाता इति ।
यानि गोस्सामानि तानि सामानि ।
अनुपृष्ठँ सँहितमेवैतदाग्निष्टोम्यात् क्रियते ।
स्वर्गकामयज्ञ उत्तरः ।
तत्र यो द्रव्यविकारः स्वर्गकामयज्ञत्वात् स भवति ।
अथ खल्वाह--सोमपीथस्याऽविदोहाय इति ।
एतदपायवदिति ।
स्वर्गकामयज्ञ एवोत्तरः ।
तत्र गोस्सामानि बाहुदाह्निरण्यात् ।
अपि वा स्वर्गकामयज्ञत्वादेव ।
एवमिव ब्राह्मणं भवति--अनुड्वाहौ वा एतौ देवयानौ यजमानस्य यद्
बृहद्रथन्तरे इति ।
वैश्ययज्ञ उत्तरः ।
तस्य कण्वरथन्तरम् ।
अभि त्वा पूर्वपीतये इति
एतासु कुर्यादिति लामकायनः ।
यथा वाप्यर्यायाः शूद्रस्तल्पमुद्दिशेत् अतो देशीयमेतद् ।
य एतद्रथन्तरस्यर्च्नु कुर्यात् एतासु त्वेव स्यात् ।
तासाँ हि स्थानमापद्यते ।
अपि चैताः परोक्षपृष्ठे षडह इति ।
सर्वबृहतीषु नान्यद् बृहद्रथन्तराभ्यामर्हति ।
यत् ककुबुत्तरासु स्यात् तं खलु विश्ववतीभिः कल्पयति ।
एतद्भक्तिर्वैश्य इति ।
तन्त्रे विप्रतिपद्यन्ते ।
ज्यौतिष्टोममित्येके ।

गायत्रीभ्यां जानीम इति ।
आशीस्तन्त्रमित्यपरम् ।
विश्ववतीभिरयं क्लृप्तः ।
ता एता विश्ववत्य इति ।
तत्र यो द्रव्यविकारो वैश्वदेवीचिकीर्षया स भवति ।
यान्यायुषः सामानि तानि सामानि अनुतन्त्रं यान्यन्यानि पृष्ठानि
ब्रह्मसामभ्यां विशोविशीयम् उत्तरस्यामग्निष्टोमसाम ककुबुत्तरासु
ककुबुत्तरास्थानँ हि ।
स्वर्गकामयज्ञ उत्तरः ।
तत्र खलु गोस्तन्त्रं करोति ।
एतदन्तं तन्त्रतरम् ।
अन्तविधोऽयं भवति ।
अनिरुक्तं प्रातस्सवनम् ।
तत्र यो द्रव्यविकारो निर्वाकार्थेन स ह भवति ।
अथैतद्देवस्थानँ स्थितनिधनम् उतास्मिन् श्रीस्तिष्ठेदिति ।
तस्य रथन्तरं पृष्ठं वाजपेयसामभिर्बृहत् करिष्यन् भवति ।
अन्नोक्तोऽर्कः वाजोक्तमन्नम् ।
१ २ ३२ ३ २उ
त्वं नश्चित्र ऊत्या इति
वारवन्तीयमग्निष्टोमसाम ।
एता राधस्वत्यः स्वर्गकामयज्ञेऽभिरूपाः ककुबुत्तरासु ककुबुत्तरास्थानँ
हि सर्वबृहतीष्वेके ।
तद् व्याख्यातँ सर्वस्वारे ।
अनुतन्त्रमुक्थप्रणयः ४
अथैषोऽभिषेचनीयः ।
तस्य द्वात्रिँशाः पवमानाः ।
अनुपूर्वमावृत्तिस्थानेषु पञ्चदशप्रभृतीन् बार्हतस्तोमानिति ।
ते प्राप्तस्थाना इति ।
तत्रोमे सामनी बाहुदाद्धिरण्यात् ।

अथाप्युभे वीप्साया अभिरूपे ।
उक्थसँस्थं करोति ।
द्वितीयेयमिज्या ।
तत्र द्वितीयाँ सँस्थामिति व्याख्यातम् ।
बहिष्पवमानमन्यत् कविमतः ।
ते खलु शश्वद् भाल्लविन आग्नेयीं पावमानीमुद्धरन्ति ।
यथा त्रिवृतं न वयमुद्धरामः पृष्ठेभ्य इयं प्रति एवं पृष्ठानामविलोप इति ।
अथापि स्तोमः प्रधानतरच्छन्दस इति ।
आनुष्टुभं पर्यायं करोति आनुष्टुभोऽभिराजेति ।
तासां मध्यमामुत्तमां कुर्मः सूर्यवत्यन्तेऽभिरूपेति ।
सम्भार्यान्वितान्याज्यानि ।
अथ खल्वत्र राजसामानि करोति राजसूयो राजसामानीति ।
एकादश करोति त्रिष्टुप्सम्पन्नानि त्रैष्टुभोऽभिराजेति ।
सर्वच्छन्दस्यानि करोति ।
स्वस्य कृत्स्नविकाराय न पाङ्क्तं करोति न हि पाङ्क्तं राजसाम विद्यते ।
एकमुदाहरन्ति सत्यश्रवसो वाय्यस्य--
३१ २ ३१ २३
महे नो अद्य बोधय इति ।
अराजसूययाजी स बभूव ।
नेहाराजसूययाजिनां सामानि क्रियन्ते ।
बार्हतानि भूयिष्ठानि करोति ।
सवनच्छन्दो बृहती ।
अथाप्येतन्मध्यन्दिनच्छन्दो भवति ।
बार्हतानि वा भूयिष्टानि लभन्त इति ।
द्वे गायत्रीसामनी करोति ।
द्वे हि पवमानमुखयोर्गायत्र्यौ भवतः ।
ते कुशलं यदनुपूर्वं पञ्च माध्यन्दिने षडार्भवे एवं रोहो भवति ।
देवस्थानं वरुणसाम सोमसामेति देवराज्ञाम् ।
सैन्धुक्षितं दैर्घश्रवसं पार्थं काक्षीवतं ब्राह्मणसाम

सद्राजसामसूपसङ्ख्यायते ।
क्षत्रमार्गेण चचार राजसूययाजी बभूवेति ।
दैवोदासं वाध्र्यश्वं वैतहव्यं त्रासदस्यवमिति मनुष्यराज्ञाम् ।
द्वैपद उक्थप्रणयः ।
विभ्रँशाशङ्कमिदं कर्म ।
द्विविधेन प्रतिष्ठेति ।
तत्रैतत् सत्रासाहीयँ सोढसहीयं नाम राजयज्ञेऽभिरूपम् ।
अनुपृष्ठमितरे ।
सदोविशीयं दशपेयस्य मध्यन्दिने विशीयं राजयज्ञेऽभिरूपम् ।
वारवन्तीयम् अग्निष्टोमसाम स्वास्वेवँ सुवारवन्तीयमिति ५
प्रतीचीनस्तोम उत्तरः ।
तं खलु बृहत्पृष्ठं करोति ।
एतद्भक्तिः क्षत्रिय इति ।
अतिरात्रसँस्थं करोति ।
चतुर्थीयमिज्या तत्र चतुर्थीँ सँस्थामिति ।
अथापीदं द्वितीयं यज्ञस्थानं यदहीनो द्वितीयो वर्णः क्षत्रिय इति ।
ज्योतिष्टोमं तन्त्रमेतत् ।
इह भक्तितन्त्रयोरयमु लोकः क्षत्रियस्येति ।
स्तोमकारित आवापः ।
व्युष्टिद्विरात्र उत्तरः ।
तत्रामुमेव द्विरात्रमाहरति ।
तत्र दशस्तोत्रीया उपाहरति ।
संवत्सरसम्पदे चतुर्विँशावुत्तरौ पवमानौ करोति ।
बहिष्पवमानसमाधये सप्तदशत्रिणवौ प्राच्यावयति ।
तावनन्तरयोः स्तोत्रीययोरनुगृह्णाति ।
एकविँशान्युक्थानि करोति ।
विभ्रँशाशङ्को द्विरात्रः ।
तत्रामुमेव प्रतिष्ठास्तोममभिप्रायुङ्क्ते ।

अथैतद् विशोविशीयँ राजयज्ञेऽभिरूपम् ।
क्षत्रस्य धृतिः किमर्थमिति ।
आलुब्धजनपदोऽयँ राजा तस्य क्षत्रसंयमार्थः क्षत्रसंयमार्थः ६
इति दशमः पटलः

अथैतान् द्वन्द्वा इत्याचक्षते ।
तेन सर्वे द्वन्द्वा द्वन्द्वे मिश्रवन्तो भवन्ति ।
यौ यावेषाँ समानमर्थमुपकृतौ तौ द्वन्द्वौ भवतः ।
राज्यकामयज्ञः प्रथमः ।
तस्य यदेवंविधस्तोमयोग एवमष्टावेकविँशान् सम्पद्यत इति ।
सप्तदशं पवमानेषु निदधाति ।
एष विट्स्तोमो भवति ।
विट्कामो राजा ।
अथाप्येते ग्रामा इव सुत्याया यत् पवमानाः सम्पूर्णाश्छन्दोभिः सामभिरिति ।
तत्र विट्स्तोमँ सप्तदशमचिकीर्षीत् ।
अनुपूर्वमावृत्तिस्थानेष्वितिशिष्टान् भागस्तोमान् ।
एवं चतुष्टोमो भवति ।
विभ्रँशाशङ्कमिदं कर्म ।
स चतुरेण प्रतिष्ठेति ।
व्याख्यातमौभयसाम्यमभिषेचनीये ।
ज्यौतिष्टोमं तन्त्रम् तद् व्याख्यातं केशवपनीये ।
अन्नाद्यकामयज्ञ उत्तरः ।
तत्र चतुर्ऋचमाहरति ।
एतदन्नाद्यसँस्तावमिति ।
आमहीयवादुत्तरमाभीकम् ।
एतद्वृष्टिसँस्तावं वृष्टिजमन्नमान्धीगवादर्कपुष्पम् ।
एतदन्नाद्यसँस्ताघमिति ।

प्रजातिकामयज्ञ उत्तरः ।
तत्रैकर्चमुपाहरति ।
एषा वृषण्वती प्रजातिकामयज्ञेऽभिरूपा अन्तरिक्षप्रवादान्तरिक्षायतना गन्धर्वाप्सरस इति ।
तत्र यो द्रव्यविकारः प्रजातिकामयज्ञत्वात् स भवति ।
शुशुत्सद्यज्ञ उत्तरः ।
तस्य द्वादशं माध्यन्दिनँ सवनं त्रिवृती अभितः ।

एवमिव ब्राह्मणं भवति--यैकादशी याद्वादशी इति ।
एकादशीः प्रातःसवन उपसञ्चक्षीत द्वादशीस्तृतीयसवने ।
एवं गरस्य व्यपादानँ सिध्यतीति ।
तदपि शश्वदध्वर्यव उदाहरन्ति ।
स्तोमो वै त्रिवृतः स्तोमो द्वादशः ।
यत् त्रिवृतो द्वादशमुपयन्ति पुनर्द्वादशात्त्रिवृतं तस्मादेतेन स्तोम इत्युक्थसँस्थं करोति ।
एवमेतासाँ स्तोत्रीयाणां व्युपादानँ सिध्यतीति ।
स्तोमकल्पायैकँ साम मध्यन्दिन उपाहरति ।
स यन्मैधातिथम् ।
एतस्यारिष्टवती योनिः प्रायश्चित्तकृत्येऽभिरूपेति ।
अत्रस्तो यो द्रव्यविकारः शुशुत्सद्यज्ञत्वात् स भवति ७
पशुकामयज्ञ उत्तरः ।
तत्र चतुष्पर्यायान् स्तोमान् करोति ।
चतुष्पादाः पशवः इति ।
तदपि शश्वद् ब्राह्मणं भवति--यच्चतुश्चतुर्हिङ्करोति ।
अथ खल्वानुष्टुभः प्रतिपदः करोति ।
पशुकामयज्ञे चतुष्पदा अभिरूपा इति ।
तास्तिस्रः सतीश्चतस्रो गायत्रीः करोति ।
गायत्रीस्थानँ हि भवति वारवन्तीयं यज्ञायज्ञीयचतुर्थेषूक्थस्तोत्रीयेषु ।

एवमिव ब्राह्मणं भवति--नोक्थो नाग्निष्टोमः इति ।
यदु घारवन्तीयं पशुसँस्तावं च ।
अपि च स्तोत्रीयाणाँ सन्निवारणाय ।
पशुकामयज्ञ एवोत्तरः ।
तत्र चतुर्ऋचमाहरति ।
एतत् पथ्यं छन्द इति ।
षोडशिसँस्थं करोति ।
एवमिव ब्राह्मणं भवति--नोक्थ्यो नातिरात्रः इति ।
पशुकामयज्ञत्वाद् गायत्र उक्थप्रणयः ।
पशुकामयज्ञावेवोत्तरौ ।
अपि वा द्विरात्राप्तिमुपकृतौ स्याताम् ।
उभयेज्यानियोगात् सप्तिसप्तदशस्तोमौ करोति ।
एतौ पशुसँस्तावाविति ।
एकविँशमुत्तरस्य बहिष्पवमानं करोति ।
त्रिकँ होतुराज्यम् ।
सप्रायावेकाहौ व्याविवर्तयिषन्नेतस्मिन् तदेकविँशे पराक्रम्य त्रिकेण वज्रेण बलं बिभेदेति लामकायनः ।
ता उ सप्तिसप्तदशावेव सम्पदेति ।
नानातन्त्रे नानापृष्ठे द्विरात्रन्यायेन सञ्चारयति च न च सञ्चारयति ।
एकाहन्यायेनाहःसञ्चारणम् ।
द्विरात्रन्यायेनासञ्चारणम् ।
जनुषैकर्चौ द्विरात्रन्यायेन निषेधान्धीगवे द्विरात्रन्यायेनाञ्जत इति ।
कावमन्त्यम् ।
एषा सामान्या तृचप्रथमा पशुप्रवादेति ।
सत्रासाहीयश्रुध्ये द्विरात्रन्यायेन श्यावाश्वक्रौञ्चे द्विरात्रन्यायेन ।
अ३ग्रे१गो राजा२र प्यस्तविष्यते इति ।
कावमन्त्यम् ।
अ३ग्रे१गो इति ।

अहेयं भवतीति शाण्डिल्यायनः ।
गोप्रवादात्तु स्नातकाः कुर्वन्तीति ८
अपचितिकामयज्ञ उत्तरः ।
तत्र चतुर्वि~शषष्ठान् करोति ।
एवमिव ब्राह्मणं भवति--विह्यतियन्तीति ।
चतुर्वि~शत्रिणवाविति वैतद् भवति ।
चतुर्वि~शं पवमानयोर्निदधाति ।
तेन प्रच्युतौ त्रिवृत्सप्तदशावाज्यपृष्ठेष्वनुगृह्याति ।
ज्योतिष्टोमं तन्त्रम् एतदपचिततरं तन्त्रयोरिति ।
स्तोमकारित आवापः ।
अपचितिकामयज्ञ एवोत्तरः ।
तस्योक्ताः स्तोमाः ।
तस्य यदेवंविधः स्तोमयोगः एवं विराज~ सम्पद्यत इति ।
द्विपदाः करोति ।
दशरात्रन्यायेन स यदेताः एता दशरात्रावसाने दृष्टा इति ।
तत्र वारवन्तीयमन्तसाम अन्तच्छन्दसि ।
सूर्यवत्यो दशरात्रन्यायेन ।
अग्न्यभियजन उत्तरः ।
तत्रोभे सामनी करोति ।
अग्न्यभीज्यां कृत्स्नीचिकीर्षन् ।
तथाप्युभयसामाग्निर्भवति ।
उभाभ्या~ हि परिगीयत इति ।
ज्योतिष्टोमं तन्त्रम् एतदाग्नेयमिति ।
स्वार~ सौपर्णं पद्निसाम पद्न्यभीज्यायाम् अग्नेर्व्रतम् अग्न्यभीज्यायाम्
स्वाशिरामर्कोऽग्न्यभियजने व्रते दृष्टो भवति ।
अग्न्यभियजन एवोत्तरः ।
तत्र ज्योतिष्टोममेवाहरति एतदाग्नेयमिति ।
त्रिवृत्पञ्चदशावाज्यपृष्ठेषु सम्पद्वशेन कुर्मः ।

व्याख्यातमौभयसाम्यम् ।
ज्योतिर्ह्येवायं विकृतः ।
तत्रौदलमनुष्टुभि तृचसमाप्तये ।
तदेतदष्टमात् पृष्ठान्वितम् ६
राजयज्ञ उत्तरः ।
तत्र द्वे स्तोत्रीयः पाहरति ककुद्रूपं दिदर्शयिषन् ।
अपि वा सटोविशायसामान्ते गृह्यमाणे सप्तदश कारयेताम् ।
विषमे स्तोमे सत्यनध्यासां बृहतीं करोति ।
ज्योतिष्टोमाट् तस्याः सामकल्पो व्याख्यातः ।
अग्निष्टुति व्याख्यातमौभयसाम्यम् ।
ज्योतिर्ह्येवायं विकृतः ।
तत्र गौरीवितमनुष्टुभि एतदृषभोक्तमिति ।
वैश्ययज्ञ उत्तरः ।
वैश्यस्य राजमात्रस्य स्वाराज्यमिच्छतो यज्ञः स्यादित्याहुः ।
राज्ञ एव खल्वयँ संविरतस्य साहसिक्याद् ।
विड्भूतस्य कितवाशयस्य सवः स्यादिति शाण्डिल्यः ।
अभिषेचनीयं प्रत्युपधावति ।
सवसामान्याद् द्वात्रिँशापायादनुष्टुभः प्रतिपदोपयन्ति ।
कुशलं यदुपवतीमेषा राथन्तरी राथन्तरो वैश्य इति ।
व्यत्यासेन नित्यां बृहतीं करोति ।
समो हि स्तोमः ।
व्याख्यातावुत्तरौ ।
राजयज्ञ उत्तरः ।
तं खलु बृहत्पृष्ठमिन्द्रन्यङ्गाभिः कल्पयति ।
एतद्भक्तिः क्षत्रिय इति ।
तत्र या इन्द्रवत्यो विस्पष्टास्ताः ।
अथापि वृत्रहप्रवादेन वृषण्वत् प्रवादेन सूर्यवत्तयेत्यैन्द्रँ रूपमनुगृह्णन्
मन्यत इति ।

तन्त्रे विप्रतिपद्यन्ते ।
ज्योतिष्टोममित्येके ।
गायत्रीभ्यां जानीम इति ।
श्राशीस्तन्त्रमित्यपरम् ।
इन्द्रवतीभिरयं क्लृप्तः ता एता इन्द्रवत्य इति ।
तत्र यो द्रव्यविकार ऐन्द्रीचिकीर्षया स भवति ।
राजपुरोहितयोर्यज्ञ उत्तरः ।
तत्रोभे सामनी उभयानि व्यञ्जनानि द्वैयज्ञा ज्योतिष्टोमं तन्त्रं नित्यं ब्राह्मणस्योक्तो यज्ञं क्षत्रियस्य १०
विजिघाँसद्यज्ञ उत्तरः ।
तत्रोभे सामनी करोति ।
विजिघाँसद्यज्ञं कृत्स्नं चिकीर्षन् ।
तत्रैतद् विशोविशीयं विजिघाँसद्यज्ञेऽभिरूपम् ।
सोमसामाथर्वणं वेत्यभिचरतः ।
सोमसामैतत् क्रूरनिधनम् ।
तस्य निधने विचारयन्ति--
इन्द्र इव दस्यूँ रमृणा २३१११ सूर्य इव दस्यूँ रमृणा २३१११ वज्रिन् सुवज्री २३१११ न् ।
श्रपि वैतेषां द्वे पूर्वे वोत्तरं वा सर्वाणि वा समस्यन्नन्त्यमेव स्वरयेद् यथा वायोर्भस्त्राया निहन्यमानायाः ह्लादः स्यात् यथा वायसी समृच्छेयाताम् यथा निष्कः कृन्तत्रेणाभिहतो ध्वनेत् यथा वा सनूपुरस्य पादस्य निघातस्य ।
हुरिणाति चाथर्वणम् ।
पशुकामस्यैतच्चतुर्निधनं पशुकामयज्ञेऽभिरूपम् ।
एवमर्थ एवोत्तरः ।
श्रपि वानाज्ञातप्रायश्चित्तये यत्रानाज्ञातं भयमागच्छेद्यथा माटवमाजगाम ।
यथा विहनु शिरो यथा वायःपतनम् ।
तदप्येवमिव ब्राहमणं भवति--इन्द्रमदेव्यो माया श्रसचन्त इति

शारिडल्यायनः ।
एवं नूनं तद्विदाञ्चकारेति ह स्माह धानञ्जय्यः ।
यदर्थ इममाजहारानाज्ञात इव खल्वयं योगो भवति ।
तत्र त एव स्तोमा ये पूर्वस्य ।
ताँस्तु यदेवं प्रयुङ्क्ते सप्रायावेकाहौ व्याविवर्त्तयिषन् ।
तन्त्रे विप्रतिपद्यन्ते ।
उभयसामतन्त्रमित्येके ।
प्रत्नवत्यो ह्येता माध्यन्दिनीया इति ।
आशीस्तन्त्रमित्यपरम् ।
अनाज्ञातप्रायश्चित्तयेऽयम् ।
तत्रानाज्ञातयोगाँश्चिकीर्षन् गायत्र्याः स्थाने द्वे बृहत्यौ निदधाति ।
ते संव्यूह्य तिस्रो गायत्रीः करोति ।
गायत्रीस्थानँ हि भवति ।
तत्र यो द्रव्यविकारोऽनाज्ञातप्रायश्चित्तये स भवति ।
अपि च विजिघाँसया ११
अभिचरणीयावेवोत्तरौ ।
तयोः श्येनेनैव द्रव्यसमुद्देश उक्तः ।
ये पूर्वयोः पूर्वस्य स्तोमास्ते तयोः पूर्वस्योद्धरति ।
सप्तदशनवदशौ प्रजातिसँस्तावाविति ।
षडतिशिष्टा द्विस्तोत्रभाजः करोति सन्दँशरूपं दिदर्शयिषन् ।
ऐडं ककुभि करोति पुरुषच्छन्दसः स्वरं विच्यावयिषन् ।
तत्रैतत् काशीतं क्षीणस्वरेडं क्षयं परेषामिच्छतीति ।
सामानुष्टुभि करोति एतानि क्रूराणि सामानीति ।
स यत् त्रयाणां प्रथममायतनामिति पूर्वाध्यायं पूर्वे यज्ञस्थाने ।
अथाप्येतत् क्रूरणिधनं वधार्थेऽभिरूपम् ।
अथापि बृहन्निधनेनानुगृह्णाति एष वै सामवज्र इति ।
बृहद्रथन्तरयोर्वदति ।
स्तोभकल्पायोत्तरे विहितवन्तौ तृचावाहरति ।

तत्र देवसाम स्यादिति धानञ्जय्यः ।
समानार्थौ हि भवतः ।
द्वितीयमिति गौतमः ।
सप्रायावेकाहौ व्यावर्त्तयिषन् ।
अथाप्येतदभिनिकृष्टगीति वधार्थेऽभिरूपम् ।
वज्रोक्तं प्रमँहिष्ठीयमुक्तो यज्ञमौपगवम् ।
ऐडत्वात् षोडशिसाम्नो न नार्मेधं करोति ।
तत्रैतदुद्वँशीयम् । एतेनेडाकामश्च सिध्यति अजामिकल्पश्चेति १२
महानाम्नीः षोडशिसाम ।
एता वज्रोक्ता राजयज्ञेऽभिरूपाः वज्रो हि राजेति ।
कथं धर्मा इति ।
कर्त्तव्या इत्येके ।
अपि ह्यासामेष स्वाध्याये धर्मो भवतीति ।
अथापि धर्मिस्थानमापन्नाः ।
षोडशिधर्मान् कुर्वन् कथं महानाम्नीनां धर्मान् न कुर्यादिति ।
अथापि वज्रोक्ता आप इति ।
अथापि सँशयेऽलोपो लोपान् न्यायतर इति ।
अकर्त्तव्या इत्यपरम् ।
पृष्ठापन्नानां वदति यदप उपनिधाय स्तुवत इति ।
यद्वेतदपि ह्यासामेष स्वाध्याये धर्मो भवतीति अन्यानप्येवंवादः स्वाध्यायधर्मान् प्रतीयाद् ।
यद्वेतद् धर्मिस्थानमापन्ना इति धर्मिस्थानमापन्नतरं खलु सदृढतरं न धर्माल्लभते ।
यद्वेतद् वज्रोक्ता आप इति शान्त्युक्ता आपः अपः पश्चात् पत्न्य उपसृजन्ति वैश्वानरमेव तच्छमयन्ति आपो हि शान्तिः इति ह्याह ।
यद्वेतत् सँशयेऽलोपो लोपान् न्यायतर इति यो रथन्तरधर्मानकृत्वा महानाम्नीनां धर्मान् कर्तव्यान् मन्येत सदृशव्याघातः ।
अथापि तस्य वज्रोक्ततरा धर्मा इति धर्मा इति १३

## अथाष्टमः प्रपाठकः

अथातो अहीनाः ।
तेषामुक्तो द्रव्याणामन्वयः ।
अथापि दशरात्रावलोपाहीनाः ।
तत्र सिद्धानि दाशरात्रिकाणि द्रव्याणि ।
आहीनिक्या रात्रेः श्रौतकक्षस्यर्चोऽपनयति ।
सत्रं चाहीनं च व्याविवर्तयिषन् ।
तत्रैताः करोति --
१ २ ३ १ २ ३
पन्यंपन्यमित्सोतारः इति ।
एताः सुतवृतीनाँ स्थाने सुतवत्य इति ।
मध्यमस्य रात्रिपर्यायस्य होतृषामणी विचारयन्ति ।
दैवोदासं वा स्यादौर्ध्वसद्मनं वेति ।
विकल्पो वा स्यात् ।
अपि वा दैवोदासमहीने कुर्यात् ।
पूर्वाध्यायं पूर्वे यज्ञस्थाने और्ध्वसद्मनं सत्रेषु उत्तराध्यायमुत्तरे यज्ञस्थाने ।
अथाप्यस्मिन् सत्रवादरूपो भवति ।
और्ध्वसद्मनमपि शर्वरीषु प्रोहन्ति । इति ।
अथ खल्वाह--त्रिणिधनं भवति इति ।
कथं त्रिणिधनँ स्यादिति ।
एतान्येव निधनानि व्यवस्यन्त उपेयुः सुवृक्तिभी २३४५ नृमादना २३४५ म् भरे २३४५ षु वा २३४५ इति ।
तदाहुः--जनेच्छं त्रिणिधनं यदनन्तराणि निधनानीति ।
अथवैतानि विहृतान्यनुपदमुपेयुः ।
तत्र निन्दा यदनुपायान्निधनानामभिव्याहारः ।
अथवा एतानि पृथक्स्तोत्रीयासूपेयुः ।
तत्र निन्दा यत् संप्रायाणां निधनानां विप्रयोगः ।
यथासमाम्नायमेवोपेयुः ।

अथापि यथासमाम्नायमेवैतत् ।
स त्रिणिधनं भवतीति शाण्डिल्यायनः ।
यत्तिस्रो निधनमात्रा भवन्तीति सर्वेषु पदेष्वभ्यासात् ।
सौमेधँ रात्रिषामेत्याचक्षते ।
कौत्समहीनादपनयति सत्रं चाहीनं च व्याविवर्तयिषन् ।
तत्रैतदाष्टादँष्ट्रमृद्धिसँस्तावम् ।
आ त्वा विशन्त्विन्दवः इति ।
एतास्वेताः सोमवतीनाँ स्थाने सोमवत्य इति ।
समुद्रप्रवादा आवत्योऽन्तेऽभिरूपा इति १
बुभूषद्यज्ञ उत्तरः ।
अपि वा षडहाप्तिमुपकृतः स्यात् एतेषाँ स्तोमानामुपधानात् ।
तत्रोमे साम्नी बार्हतं तन्त्रं बृहत्पृष्ठस्योपवती प्रतिपत् ।
कस्ये हेतोरिति ।
बुभूषद्यज्ञोऽयं भवति ।
अनवधारितकाम इति लामकायनः ।
तत्र सर्वाभिप्रायां प्रतिपदमचिकीर्षीत् ।
अथापि षडहोऽयं संलङ्घितः ।
सैषा षडहप्रतिपद् भवति ।
अथाप्युभे स्थानवती अचिकीर्षीत् ।
तन्त्रेण बृहत्प्रतिपदा रथन्तरमिति ।
अथाप्येतामेवान्यवेदाः समामनन्ति ।
आन्धीगवादुत्तरमाथर्वणम् ।
षडहोऽयँ संलङ्घितः ।
तदेतत् प्रायश्चित्तिसाम ।
पशुकामयज्ञ उत्तरः ।
अपि वा द्विरात्राप्तिमुपकृतिः स्यात् एतेषाँ स्तोत्राणामुपधानात् ।
दशरात्राप्तिं वा छन्दोमानामुपधानाद् ।
व्याख्यातमौभयसाम्यम् ।

अनुपृष्ठं तन्त्रम् द्वयान्याज्यानि द्वयानि पृष्ठानि ।
द्वैविध्यात्स खल्वाप्तोर्यामाणां पृष्ठानां वैश्वजितानि पृष्ठानि गर्भान् करोति
।
एतानि नानात्वक्लृप्तानीति ।
अथाप्येवमाप्तिरितरा दशरात्रस्येति ।
स कस्य हेतोर्गर्भान् करोतीति ।
एवꣳ हि शश्वद्बह्वृचा अधीयते--गर्भवन्ति पृष्ठानि भवन्ति आप्तोर्यामस्य
तानि गर्भकारꣳ शꣳसेत् पशवो वै पृष्ठानि यद् गर्भवन्ति भवन्ति
प्रजनेनैव पशून्त्समर्द्धयन्तीति ।
बृहद् वैराजगर्भं करोति ।
बार्हतं वै वैराजम् ।
तेनैव तदनुरूपगर्भं वामदेव्यं महानाम्नीगर्भं करोतीति ।
आपो वै वामदेव्यम् ।
आपो महानाम्न्यः ।
तेनैव तदनुरूपगर्भं श्यैतं वैरूपगर्भं करोति ।
पशवो वै श्यैतम् ।
पशवो वैरूपम् ।
तेनैव तदनुरूपगर्भं कालेयꣳ रेवतीगर्भं करोति ।
ऐडं वै कालेयम् ।
ऐडा रेवत्यः ।
तेनैव तदनुरूपगर्भम् ।
अथो द्रवदिडं कालेयम् ।
कस्तेडा रेवत्यः ।
तस्मिन् मिथुनादेव प्रजायते इति ।
अपि वा सर्वाण्यावर्तीनि वैश्वजितैरावर्त्तिभिर्गर्भवन्ति कुर्यात् ।
तत्र बृहत् सञ्चरते ।
तस्य वैरूपं विधृत्या इति ।
तत्र गर्भविधानमाहुः--मध्यमं पर्यायꣳ स्वस्तोत्रीयं गर्भं कुर्यात्

प्रथमोत्तमौ मुख्यस्य एवं गर्भोपपत्तिर्भवतीति ।
कथं धर्माः ।
कर्त्तव्या इत्येके ।
गर्भभूतानि भवन्त्यनुभूतानि अधर्मा गर्भो भवतीति ।
कर्तव्या इत्याचार्याः ।
तत्र तान्तेव वचनानि यानि विश्वजिति सुरूपं जराबोधीयस्य स्थाने एतत्
पशुसँस्तावमिति ।
उद्धरत्याथर्वणं द्विपदा ।
अत्र करिष्यन् भवति ।
तत्रैतत् सौहविषमभ्यस्तगीत्यतिरिक्तमतिरिक्ते कल्पे २
प्रजातिकामयज्ञ उत्तरः ।
तत्र यो द्रव्यविकारः प्रजातिकामयज्ञत्वात् स भवति ।
व्याख्याता उत्तरे ।
अथैत एकस्तोमाः एतान् कामानभ्युपकृताः ।
यथैतद् ब्राह्मणम् ।
अथाप्येकस्तोमान्यहीनिकान्यहानि ।
सोऽन्ते न्यायमदिदर्शयिषीत् ।
तत् खलु बृहद्रथन्तरपृष्ठान् कुर्मः ।
राथन्तरबार्हता ह्येते स्तोमा इति ।
ज्यौतिष्टोमं तन्त्रम् ।
ज्यौतिषा ह्येते स्तोमा इति ।
तत्रानुपृष्ठं द्रव्यागमः ।
षोडश्याः षोडशिनोऽनुब्राह्मणं वेति विचारयन्ति ।
किँ स्तोमा अनुब्राह्मणँ स्युरिति ।
एकविँशस्तोमा इति ।
एष एषां प्रकृतिस्तोमो भवति ।
अथाप्याहुः--अहस्तोममहः प्रथमोत्तमयोरन्वियाताम् ।
एकविँशं तु पञ्चदशस्य कुर्यात् ।

पञ्चदशँ सप्तदशस्य ।
एवं तँ स्तोमँ सँस्तुतोऽतिरात्रः सम्पद्यते ।
अथो यस्तस्याह्नो भवति अहस्तोमं त्वेवान्वियुरित्यनुब्राह्मणम् ।
अनुव्यूहमित्येतत् स्यात् ।
यो वा ह्यह्नः स्तोमः स षोडशिनो न्यायेन ।
यो वा ह्रसीयानित्यह्नः स्तोमं चैनमनुयन्तं पश्यामः ।
अथातो द्विरात्राः ।
तत्र ज्योतिष्टोमसर्वस्तोमौ समस्यति ।
मा विलोपे भूयान् विलोपो भूदिति च दाशरात्रिकाणामह्ना द्वे करोति ।
अथैतानि दशरात्रस्यान्त्याहानि चतुर्थषष्ठे नवमदशमे इति ।
एतेषां द्रव्याण्यहीनान्तेषु चिकीर्षितानि ।
तत्रोत्तरत्र बहिष्पवमानम् ।
अन्यत् प्रतिपदो नावमिकम् ३
अथैते हाविष्मतहाविष्कृते ।
हाविष्कृतं पूर्वस्याह्न आर्भवचरँ स्थानापन्नं भवति ।
द्वितीयस्थानं च हाविष्मतम् उत्तरस्य माध्यन्दिने सँहितं च ।
भागविलोपे भागसन्तानाय निकामयते ।
अपि चैवँ सती नेदीयसी हाविष्मतहाविष्कृते भवत इति ।
जनुषैकर्चावहर्गणन्यायेन त्रैशोकवैखानसे जागतस्य भागस्यानुग्रहाय ।
अहीनान्तेष्वर्काश्चिकीर्षिताः ।
सँरोधान्विह दीर्घतमसोर्कः ।
विपर्ययेणेतरयोराप्तिः ।
स यदेतास्वेव स्वयोनिः ।
अथाप्येता धृतवत्यो दद्मितवत्योऽन्तेऽभिरूपा इति ।
ज्योतिष्टोमान्युक्थान्यहीनान्तेषु चिकीर्षितानि ।
एवं पथ्यावसानमिति ।
आयुषमुत्तरस्य द्वितीयं करोति ।
एते सप्रायास्त्रिकद्रुका इति ।

बृहत्पृष्ठं बार्हतं तन्त्रं द्वितीयँ हि स्थानमापन्नमिति ।
उद्धरत्यन्तलक्षणानि--त्रिणवत्रयस्त्रिँशयोरन्वपायमुत्सेधनिषेधौ परिस्वानमिति ।
जराबोधीयमहीनेषु चिकीर्षितम् ।
एतच्छन्दोमसामेति ।
तद्यदुष्णिहि राथन्तरात् स्तोमाच्छुध्यमविच्यावयिषीत् ।
उद्वँशीयं तैरश्चयं वेति विचारयन्ति ।
पूर्वस्याह्न उक्थान्त इत्यह्नोद्वँशीयम् ।
उपक्रमणीयमहरिति तैरश्चयम् ।
अषोडशिका रात्रिः स्तोमज्ञात्रेण अषोडशिका ह्येवायुर्भवतीति ।
त्रिवृत्पञ्चदशोऽग्निष्टोमः ।
उत्तरस्य पूर्वमेकस्तोमतामिवाह्नो दिदर्शयिषन्नायुषा प्रच्युतं पञ्चदशं पूर्वस्मिन्नहन्यनुगृह्णाति ।
तत्र यदेतत् स रूक्षोऽभवत् इति ।
कपिवनो भायजात्यश्चातूरात्राय जामदग्नये दिदीक्षे ।
ब्रह्मचारिणँ सम्पन्नकुलीनमपः प्रहृत्य ।
तस्य त्रिवृतपञ्चदशमहरुपेतं बभूव ।
अथेतरस्तमर्थँ साधयित्वा प्रत्याजगाम ।
सामायमिममहर्यागं निशीशमतेति ।
आयुरतिरात्रमुपदधौ ब्रह्मचारिणश्च परिहारेण यज्ञप्रत्यवहारेण च रूक्षो बभूव ।
यस्त्वेतौ दोषौ परिहरेन्न रूक्षः स्यादिति ।
पूर्वेणैव द्रव्यकल्पो व्याख्यातो व्याख्यातः ४

इति द्वितीयः पटलः

अथातस्त्रिरात्राः ।
तत्र वामदेव्यं तृतीये पृष्ठे करोति ।
लोकविधां त्रिरात्र उपकृतः ।

एतानि लोकसामानीति ।
तानि कुशलं यद्यथाभक्ति निदधाति ।
तन्त्रेषु विप्रतिपद्यन्ते ।
आहीनिकतन्त्राणीति गौतमः ।
तद्गायत्रीभिर्विजानीमः ।
एकैवात्राहीनिकी भवति ।
३ २ ३ २उ
अस्य प्रत्नाम् इति ।
ता यत्करोति सहस्रवती सहस्रवत्तदभिरूपेति ।
एकाहिकानीति धानञ्जय्यः ।
तद्गायत्रीभिरेव जानीमः ।
एकैवात्राहीनिकी भवति ।
२र २ ३ २ ३
प्र सोमासो विपश्चितः इति ।
यत् करोति प्रवत्युपक्रमेऽभिरूपेति ।
अहरहरेवाहीनैकाहाभ्यां वर्तत इति शाण्डिल्यायनः ।
एवं युक्ता एता गायत्र्यो भवन्ति ।
अथ खल्वत्र भागविपर्ययो भवति ।
लोकविधां त्रिरात्र उपकृतः ।
तं यथाभक्त्यचिकीर्षीत् ।
ते एते परेऽहनि भागविपर्ययाद् द्रव्यसमासेन वर्तेते ।
द्वितीयेऽहनि स्थानस्थानि द्वैतीयकानि भागान्वितानि तार्तीयिकानि ।
एतदेव विपरीतम् ।
तृतीये खल्वत्र द्वयान्यक्षररूपाणि क्रियन्ते ।
प्रजापतेश्च वागक्षराण्यक्षराक्षराणि च ।
आज्यादिषु प्रजापतेर्वागक्षराणि यथोपलम्भमहस्स्वक्षराणि ।
एकाक्षरणिधनं यौधाजयम् ।
एष आचार्यसमयः ।
अथाप्याह--यदाक्षराणि प्रथममहर्भजन्त इति ।
व्याख्याता अर्काः तथाज्यदोहानि ।

पूर्वावर्कौ व्यत्यस्यति ।
अक्षरणिधनं प्रथमेऽहनि चिकीर्षन्नाज्यदोहानां प्रथमं तृतीये ।
एवमिव ब्राह्मणं भवति--अथाप्येषामेतत् त्रिणिधनं तृतीयेऽभिरूपम् ।
अनुष्टुभि प्रथमस्य करोति ।
अत्रैव सन्तानार्थानि भवन्ति ।
सन्तानार्थमिदं भवति ।
द्व्यक्षरणिधनत्वादनुच्छन्दसम् ।
इतरयोरैडमन्त्यं करोति ।
इडानुग्रहाय बृहतीं वा स्वेन सामान्तेनापिपादयिषीत् ५
उपवती द्वितीयस्य प्रतिपन्नवमात् स्तोमान्विता ।
१ २ ३
कया ते अग्ने अङ्गिरः इति होतुराज्यम् ।
केति तृतीयमिति हि भवति ।
अथाप्याह--यत् सामा स्तोमो भवति तदाज्येषु । निराह इति ।
ता एताः कवत्यो यथा वामदेव्यस्यर्चो दाशरात्रिकाण्युत्तराणि सन्तनीति ।
स्वयोनीति होतृकपृष्ठान्येतानि ।
छन्दोमत्र्यहे प्रायश्चित्तार्थे गायत्रपार्श्वं मैत्रावरुणसाम ।
एतद्वामदेव्यसदृशम् ।
तत् खलु बृहतीषु करोति त्रिस्थानां बृहतीं पृष्ठेषु चिकीर्षन् ।
अथाप्यस्मिन्नक्षराक्षरं भवति ।
ककारषकारादिरकारः सन्तनि ब्रह्मसाम ।
१ २ ३ १ २ ३ १
अस्तावि मन्म पूर्व्यम् इति ।
एता ब्रह्मप्रवादा इति ।
संकृत्यच्छावाकसाम नवमाद्भागान्वितम् ।
अथ खल्वत्राजामि भवति ।
लोकविधां त्रिरात्र उपकृतः ।
सम्भिन्नमाभ्यां लोकाभ्यामन्तरिक्षमिति ।
पाञ्चमिकीं ककुभं करोति ।
तस्यामक्षराक्षरं भवति ।

ककारषकारादिरकारः पिपीलिकामध्यां करोति ।
वागुक्तोऽयं त्रिरात्रः ।
तत्रोभावाकारावनुष्टुभामचिकीर्षीत् ।
नावमिकीरुत्तराः ।
अक्षरसमासो हि तार्तीयिकेषु ।
तासां मध्यमामुद्धरति ।
दशरात्रिलिङ्गेति ।
तत्रैतां करोति ।
१ २ ३ १ २
तँ सखायः पुरूरुचम् इति ।
एषा सखिमती यथा वामदेवस्यर्चः ।
ता यदावर्तयति परिवत्या प्रक्रमं परिजिहीर्षन् ।
नानाग्निष्टोमसामानि ।
नानात्वावृत्तार्थो नानाछन्दः ।
स्वावृत्तेष्वेवं भूयो नानात्वमिति ।
स यदिहानुष्टुभं करोति ।
बृहतीः कृत्वानुष्टुभा वेलेति ।
तत्रैतद् विशोविशीयँ स्वयोन्यापन्नं पुरस्तादेतत् स्थानम् ।
वाक्प्रवादोऽत्र भवति ।
भागान्वितान्युक्थानि ।
१ २ ३ १ २र
होता देवो अमर्त्यः इति ।
तृतीयस्य होतुराज्यम् हो इति तृतीयमिति हि भवतीति ।
गोषूक्तं प्रायश्चित्तिसाम ।
एतस्मिन्नक्षराक्षरं भवति ।
रेफादिरकारः सतोबृहतीं करोति ।
त्रिपदा त्रिरात्रेऽभिरूपेति ।
सत्रासाहीयं मैत्रावरुणसाम ।
एतद् वामदेव्यसदृशम् ।
पुरस्तादेतत् स्तोभं बहिःस्वारम् ।

यथा वामदेव्यम् ।
वारवन्तीयमग्निष्टोमसाम ।
एतद् गायत्रीसामापन्नं पुरस्तादेतत् स्थानम् ।
वाक्प्रवादोऽत्र भवति ।
वागुक्तोऽयं त्रिरात्रः ।
अपि वानुष्टुभोपपत्त्या वाक्प्रवादेनानुग्रहो भविष्यतीति ।
अक्षरविक्रमेऽयं त्रिरात्रः ।
अपि वानुष्टुभोपपत्त्याक्षरप्रवादेनानुग्रहो भविष्यतीति ।
विद्वानविद्वानिति तु भवति ।
नानासाधुरयं त्रिरात्रः ।
तत्र नानर्त्विजोऽचिकीर्षीत् ।
कथमविद्वानृत्विक् स्यादिति त्वेवैतत् सदस्यानेव प्रतिग्राहकान् कुरुत इति ६
राजयज्ञ उत्तरः ।
तस्य यदेवँविधोऽहर्योगः ।
एतान्यन्ताहानि अन्तो हि राजेति ।
महानाम्नीर्मध्यमस्याह्नः पृष्ठं करोति ।
सर्वच्छन्दस्यास्ते ।
सर्वपशूनामालम्भो भविष्यतीति ।
अथाप्येता वज्रोक्ता राजयज्ञेऽभिरूपाः वज्री हि राजेति ।
कथं धर्मा इति ।
कर्तव्या इत्येके ।
ते चैव करणवर्णा ये वज्रे ।
अपि चेह स्वस्थानतराः पृष्ठं च हि भवति ।
अहीने च ।
अथापि बह्विदमिहाशान्तं क्रियते ।
सर्वपशूनामालम्भोऽव्यभिमेथिकाः पृष्ठविलोपः ।
तत्रापः शान्त्यर्थाः ते क्रियमाणा बृहद्रथन्तरयोर्धर्मान् कारयेयुरिति ।

अथापि संयुक्तधर्मा इति ।
अथ बृहद्रथन्तरयोर्धर्मान्न कुर्युः ।
महानाम्नीबलात्तु नूनम् ।
महानाम्नीनां धर्माः क्रियेरन्निति ।
अकर्तव्या इत्यपरम् ।
तत्र ते चैवाकरणवर्णा ये वज्रे ।
अपि च यः स्वाध्यायधर्मान् प्रतीयात् कृत्स्नान् प्रत्येतुमर्हतीति ।
तेऽवेलायां नोर्ध्वं माध्यन्दिनीन् महानाम्नीभिः स्तुवीरन् ।
एका वा द्वौ वा सम्प्रगायेतां नेतरे शृणुयुरिति ।
एतान्येवमकुर्वतो निर्वचनस्वाध्यायधर्मः ।
अथापि यो बृहद्रथन्तरयोर्महानाम्नीकारितान् धर्मान् मन्येत
भूयश्चाल्पीयसेऽनुसँहरेत् प्रत्यक्षे च परोक्षायानुचर्य्यं गमयेदिति ।
अतस्तत्पापीयो बृहद्रथन्तरधर्मानकृत्वा महानाम्नीनां धर्मान् कर्त्तव्यान्
मन्येत ।
समानोत्पादानाँ समानविधानानाँ सतां य एकान् कुर्यात् ।
एकान् न किँ सोऽत ऊर्ध्वं न व्याहन्यात् ।
व्याख्याता अनुष्टुभः प्रतिपदश्चतुष्टोमे ।
ताभिः प्रच्युतामुपवतीं द्वितीयेऽहनि प्रतिपदं करोति ।
कविमन्तं प्रथमात् प्रच्युतं तृतीयेऽहन्यनुगृह्णाति ।
वामदेव्यं महानाम्नीभिः प्रच्युतँ स्वे स्थानेऽनुगृह्णाति ।
पार्थुरश्मं ब्रह्मसाम ।
पङ्क्तिप्रतिप्रयोजना महानाम्न्यः ।
एतत् पाङ्क्तं क्षत्रसाम अथकारणिधनम् ।
ताभ्यां प्रच्युते सन्तनिनी माध्यन्दिनेऽनुगृह्णाति ।
आशीःसामनी मा प्रच्योषातामिति ७
अथैतस्य पतन्तकस्य प्रथमेऽहनि वैष्णवीष्वनुष्टुप्सु पावमानीषु
बहिष्पवमानं कल्पयेदित्येक आहुः ।
एतत् प्रकृतौ दृष्टं भवतीति ।

नैतदयुक्तं स्तोमेषूपपद्यत इत्यपरम् ।
एतस्मिन्नेव बहिष्पवमाने गायत्रीः पावमानीरावपेत् ।
एतदिह हाविष्कृतं भवतीति ।
चतुष्टोमकारितास्ता भवन्तीत्यपरम् ।
गायत्रीष्वेव कल्पयेदिति ।
अथ खल्वाह--एते एव पूर्वे अहनी इति ।
तत्रैके पातन्तके प्रतियन्ति ।
एतं विधाय प्रदेशो भवतीति ।
प्रकृत्यपश्रया विकारा भवन्तीत्यपरम् ।
प्राकृतस्यैवाश्वमेधस्य प्रतीयादिति ।
अथापि ते नानास्तोमाः ।
एकस्तोमोऽयं भवति ।
तत्र स्वतन्त्रा एकाहाः स्युरित्येके ।
बहुधैकाहानाँ स्वातन्त्र्यं दृश्यते ।
यथा--आयुष्कामे षड्रात्रनवरात्रयोरिति ।
त्रिरात्रतन्त्रा इत्यपरम् ।
एवं च तन्त्राविलोपः ।
अपि चैषोऽहीनन्याय इति ।
अषोडशिके गोआयुषी इत्यपरम् ।
एवं दृष्टे च अपि चैवं प्रदेशो भवतीति ।
अथैष वैदत्रिरात्रः ।
तस्य त्रिवृत्स्तोमाः स्युः ।
षोडशिन उत्तमस्यातिरात्रस्य षोडशं प्रथमँ रात्रिषाम ।
एवं तावत् स्तोत्रीयो यथा त्रिरात्रः ।
नाना षोडशसामानि नानात्वार्थः ।
नानदं प्रथमः ।
उद्वँशीयं द्वितीयः ।
एतदानुष्टुभँ हरिवद्योनि यथा गौरीवितम् ।

तस्य स्थाने तैरश्चयम् ।
एतत् पूर्वाभ्याँ सप्रायं न्याय्य उत्तमे षोडशि ।
अथैत उत्तर एतान् कामानभ्युपकृताः ।
यथैतद् ब्राह्मणम् ।
स्तोमकारित आवापः ।
अन्तर्वसावप्रत्यवरूढानि उत्तमस्याह्न उक्थानि ।
लोकविधां त्रिरात्र उपकृतो रोहोपकारः ।
अथाप्येवमव्याहतँ सवनमिति ।
न्यायक्लृप्त उत्तरो न्यायक्लृप्त उत्तरः ८
इति तृतीयः पटलः

अथैष चतुर्वीरो बृहद्रथन्तरपृष्ठ एव ।
न हि षाडहिकान्यनुभवन्ति ।
नान्यो व्यलुलुप्सीत् ।
ते यन्नानाछन्दस्सु ब्राह्मणेनैव तद् व्याख्यातम् ।
कानि तन्त्राणीति ।
चतुरहतन्त्राणीति गौतमः ।
तद् विजानीमः ।
चतुर्थेऽहनि चतुर्थप्रतिपदमादिश्यैकाहतन्त्राद्रात्रिमुपजिगमिषन्नस्य प्रत्नां करोतीति ।
त्रीण्यहीनिकानि ।
एकमैकाहिकमिति धानञ्जय्यः ।
एवं पर्वणाहीनस्यादानम् ।
एकाहतन्त्राद् रोत्ररुपायः ।
स यदेतदनन्ततन्त्रतरँ स्तोमकारित आवापः ।
उद्धरति जनुषैकर्चौ स्तोमकल्पार्थः ।
तत्र ज्योतिष्टोमौ करोति ।
तयोः स्थाने नानापवमानिकेभ्यो नानात्वार्थः ।

अथ यत्रायमर्थो भवति साप्तमिकीं तत्र ककुभं करोतीति ।
असञ्चाराय तत्र खलु पदस्तोभान् करोति ।
चतुरोऽयं वीरानुपकृतः ।
त एते चत्वारः समानयोनयः समानार्षेयाः पुन्नामधेया गणेडा गणनिधनाः।
अपि वा चातुर्विध्यादेव क्रियेरन् ।
ताँस्तु यदेवं प्रयुङ्क्ते एवमिडान्तो रोहः ।
अपि चैवं दाशरात्रिकोऽवसाने भवतीति ।
तान् खल्वन्त्यान् करोति ।
अत्रैषाँ स्वच्छन्द इति ।
तत् कुशलं यन्नित्यासु ।
धर्ता दिव इति ।
उत्तम एतासु स्वयोनिः ।
अथाप्येता अन्तलक्षणैः सम्पन्ना इति ।
व्याख्याता अर्काः ।
तेषां तदेवानुपूर्व्यं यत् त्रिरात्रे गोषूकं प्रायश्चित्तिसाम ।
पदस्तोभबाधितमर्कं द्विपदास्वनुगृह्णाति ।
तेन प्रच्युतँ वारवन्तीयमुष्णिह्यन्तसाम मा प्रच्योष्टेति विपरिहरति ।
आनुष्टुभेऽजाम्यर्थः ।
एतेनैवोत्तरे व्याख्याताः ।
उद्धरति पदस्तोभान् ।
न ह्येते चतुरो वीरानुपाकृताः ।
तत्र कुशलं यन्नित्यादिपदस्तोभापायादर्कः स्वँ स्थानँ समापद्यते ।
तस्यानुसमाप्तिँ श्रुध्यवारवन्तीये समापद्येते ।
अतो यो द्रव्यविकारः स्तोमकारितः स भवति ६
अथ खल्वाह--वसिष्ठस्य जनित्रे भवतः इति ।
कस्येदं ब्राह्मणँ स्यादिति ।
बृहद्रथन्तर योगस्येत्याहुः एते हि विश्वोवसीयसी आजनित्रे भवत इति ।
अपि वा रथन्तरस्यैव द्वियोगस्यैतद्धि वासिष्ठमिति ।

अपि वा रथन्तरस्यैव भवतश्च वासिष्ठस्य एते वासिष्ठे भवत इति ।
जनित्रे एवानुकल्पयेदिति कौत्सः ।
जनित्रे भवत इति सति किमन्यदनुकल्पनात् ।
न त्वेवानुकल्पयेत् ।
न ह्येते आनवकाश्यान्ननुकल्पयतीति ।
एतेषामेव विचाराणामेकस्यैतद् ब्राह्मणँ स्यात् ।
एकस्तोमतामिवाह्नां दिदर्शयिषन्नुत्तमे भागस्तोमान् करोति एते
प्राप्तिस्थाना इति ।
पञ्चरात्रस्य चतूरात्रेणैव पृष्ठवादो व्याख्यातः ।
ते खलु स्वासु करोति ।
न ह्ययं चतुरो वीसनुपकृतः ।
अथापि नानाभागश्चतूरात्रः ।
अथेह समानभागे चतुर्थपञ्चम इति ।
कानि तन्त्राणीति ।
पञ्चाहतन्त्राणीति गौतमः ।
तच्चतूरात्रेणैव व्याख्यातम् ।
चत्वार्याहीनिकानि ।
एकमैकाहिकमिति धानञ्जय्यः ।
तत्तेनैव व्याख्यातम् ।
अग्निष्टोमः प्रथममहरुक्थानि मध्यः ।
दशरात्रन्यायेन यत्र सँस्थाभिप्रयुज्यते एषाभिप्रयुज्यते ।
उद्धरति षोडशिनं चतुर्थात् ।
विराजमन्वपायँ स्वराजोपेयुः ।
स्तोमस्य वा लोपात् ।
अथाप्येनमतिरात्रे फरिष्यन् भवति ।
तन्न समविचारयिषीत् ।
उद्धरति आतीषादीयं धर्मिणि तत् पुरा षडहे धर्मि भवति ।
तत्र याथान्तर्यात् क्रोशं प्रत्याहरति ।

अपि वा श्रुध्येन प्रच्युतमिहानुगृह्णाति ।
तदु भवत्यूर्ध्वेडं बार्हतेऽहनीति ।
स्तोमकारित आवापः ।
एतेनैवोत्तरो व्याख्यातः ।
स्तोमकारित उद्धारः ।
सप्तदशस्तोमं षोडशिनं करोति ।
यो वा ह्यह्नः स्तोमः स षोडशिनो न्यायेन ।
यो वाह्नि भक्तिरेवमुत्पन्नो हि भवति ।
अथाप्यनादिष्टव्यूहेन भवति ।
अथ कथमहीनाह्नो रात्रेरितीति ।
ह्रसीयानित्यह्नः स्तोमं चैनमनुयन्तं पश्यामः ।
अथाप्याह--सप्तदशँ स्तोमा नातियन्तीति ।
व्रताप्तिमुत्तर उपकृतः ।
स खल्वेकाहक्लृप्तः ।
ते व्याख्याताः १०
ऋतुषडहे कथँ रात्रिरिति ।
अकर्त्तव्येति शौचिवृद्धिः ।
एवमुत्पन्नो हि भवति ।
अथाप्यनादिष्टा व्यूहेन भवति ।
अथापि कथमहीनाह्नो रात्रेरुपायो भविष्यतीति ।
अथापि कृत्स्नतायै वै नूनमिह रात्रिः क्रियेत कृत्स्नोऽयँ षडह इति ।
अथाप्येष चतुर्थो भागो रात्रेः प्रत्यर्द्धितामत्यक्रमिष्यदिति ।
कर्तव्येति गौतमः ।
आदिष्टा कल्पेन भवति ।
अथाप्येषाहीनसँस्था या रात्रिस्तामवसानभूतां षष्ठमहरागच्छतीति ।
अथाप्येषोऽहीनन्यायः ।
सर्वेऽतिरात्रमन्तः ।
अथाप्यतिरात्रिकं व्रतम् ।

तस्यान्ते निपाताद् रात्रिमुपधीयमानां पश्यामः ।
यथा सप्तरात्रेषु ।
अथापि यः पृष्ठ्यावलम्बस्य पञ्चमादर्धादेशाद् रात्रिमपनयेत्
अर्थापायाद्रात्र्यपायाच्च स्तोमप्रत्यवरोहम् इहापि सोऽर्थागमाद्रात्रिं
प्रत्येतुमर्हतीति ।
यद्वेतदेवमुत्पन्न इति अन्ततो वै तत्र भवति अन्तदर्शना रात्रिरिति ।
यद्वेतदनादिष्टा व्यूहेनेति नित्यत्वान्नूनमेनानादिशतीति ।
यद्वेतत् कथमहीनाह्न इति कथं वाऽप्यतिरात्रिकोऽभविष्यदिति
पश्यामश्चाहीनिकेभ्यस्तन्त्रेभ्यो रात्रेरुपायम् यथा त्रिरात्रेषु ।
यद्वेतत् कृत्स्नोऽथँ षडह इति कृत्स्नो ह्येव षडहः रात्र्या तु कृत्स्नतरो
भविष्यतीति ।
यद्वेतदक्रमिष्यदिति अग्र एवातिक्रान्तो भवति ।
अतिक्रामन्तं च पश्यामः ।
यथाप्तोर्यामे गौरीवितापायात् पृथक् स्वाराणि करोति नानासाधुरहीन
इति ।
स यदेतान्येतानि रूपसम्पन्नानीति ११
आयुष्कामयज्ञ उत्तरः ।
तत्र त्र्यहौ समस्य निदधातीति ।
अहीनत्र्यहं चैकाहत्र्यहं च ।
कस्य हेतोरिति ।
त्रयः प्राणापानव्यानाः इति ।
अग्निष्टोमसँस्थं ज्योतिषम् ।
एषास्य प्राकृती सँस्था ।
अथाप्येतया सँस्थया चरति ।
अथापि नानात्ययाविमौ त्र्यहौ तावुपक्रमसँस्थया प्राचिक्रमिषीत् ।
अषोडशिका रात्रिः स्तोमज्ञात्रेण अषोडशिको ह्येवायुर्भवतीति ।
द्वितीयस्याह्नो वासिष्ठं माध्यन्दिनान्त्यँ स्यादिति शाण्डिल्यः ।
षष्ठार्थेनेदं पुरा प्रच्यवते नेह षष्ठार्थ इति ।

पार्थमेवेति गौतमः ।
एतत् समूहसाम समूढावच्छेदोऽयं भवतीति ।
तृतीयस्यानुष्टुभि बृहत् करोति ।
त्र्यहे सर्वं बृहद्रथन्तरे युयुक्षमाणः ।
अजाम्यर्थं वैव स्यात् ।
पृष्ठ्यावलम्ब उत्तरः ।
तस्य पञ्चाहो बृहद्रथन्तरपृष्ठ एव ।
विश्वजिति हि पृष्ठानि करिष्यन् भवति ।
उद्धरति षोडशिनं चतुर्थात् ।
तत् पञ्चरात्रेणैव व्याख्यातम् ।
त्रयस्त्रिँशानि पञ्चमस्याह्न उक्थानि ।
रात्रिकारितो हि स्तोमप्रत्यवरोहः ।
तान् विश्वजिति करिष्यन् भवति भवति १२
इति चतुर्थः पटलः

अथातः सप्तरात्राः ।
तत्र पृष्ठ्यं व्रतं सप्तमं करोति ।
एतदकृतं पृष्ठं भवति ।
अथाप्यनङ्गमेतद् व्रतस्य यदुक्थानि ।
तत्र ज्यौतिष्टोमानि स्वस्तोमान्याहरति षोडशिमती रात्रिरहीनन्यायेन ।
अथाप्यनङ्गमेतद् व्रतस्य यद्रात्रिः ।
तत्र यैव कृत्स्नतमा रात्रिस्तामाहरतीति ।
सप्तदशमुत्तरस्य व्रतम् ।
स्तोमकारित उद्धारः ।
तस्य स्तोमान्वयीत्युक्थानीति ।
किँ स्तोमानि स्युरिति ।
एकविँशस्तोमानीति गौतमः ।
एष एषां प्रकृतिस्तोमो भवति तमन्वियुरित्येतत्स्यात् ।

सप्तदशस्तोमानीति धानञ्जय्यः ।
एषोऽस्य व्रतस्य स्तोमो भवति तमन्वियुरित्येतत्स्यात् ।
पञ्चविँशस्तोमानीति शौचिवृक्षिः ।
एष व्रतस्य प्रकृतिस्तोमो भवति तमन्वियुरित्येतत् स्यात् ।
अथाप्येवं तासाँ स्तोत्रीयाणामनुग्रहो भवति याः पञ्चविँशाद् व्रतात् सप्तदशे क्रियमाणेऽपयन्ति ।
द्वे पक्षस्तोत्रीये नानुगृह्येते ।
ते चेदनुजिघृक्षेत् त्रिणवं प्रथममुक्थं कुर्यात् ।
एकविँशँ स्तोमँ षोडशिनं करोति ।
एषोऽस्य प्रकृतिस्तोमो भवति ।
अथाप्येवं तासाँ स्तोत्रीयाणामनुग्रहो भवति यथैतच्छौचिवृक्षिरिति ।
छन्दोमपवमानमुत्तरस्य व्रतम् ।
स्तोमकारित आवापः ।
अथ खल्वत्र विधर्माकरिष्यन् स्तोमज्ञात्रेण कस्मात् धर्म करोतीति ।
द्वन्द्वयोः साम्नोर्याथान्तर्यात् पूर्वमादत्ते ।
अथाप्येतस्याविकृतं निधनं भवति ।
अविकारः पूर्वो विकारादित्येके ।
एकविँशान्युक्थानि ।
एकविँशस्तोमँ षोडशिनं करोति ।
तद् व्याख्यातम् ।
प्रथमे सप्तरात्रेऽभ्यास उक्तः ।
उत्तरस्य पञ्चाहो बृहद्रथन्तरपृष्ठः ।
चतुर्थस्याह्न एकविँशः षोडशी ।
पञ्चमस्याह्नः पार्थस्य लोक आकूपारम् वात्रेयं वेति विचारयन्ति ।
नानापुरुषकल्पौ स्यातामिति ह स्माह धानञ्जय्यः ।
अन्य एवाकूपारमरोचयिष्यत अन्य आत्रेयम् ।
आत्रेयं चैवाभिरूपतरं पञ्चमेऽहनि स्थानसम्मितम् पञ्चमस्थाना अत्रय इति ।
चतुर्थस्याह्नः शुद्धाशुद्धीयस्य लोक आकूपारम् ।

पञ्चमस्याह्नः पार्थस्यात्रेयम् ।
पार्थं चैव नित्यम् ।
अहः पार्थं व्याख्यातम् ।
आत्रेयं नु खलु कुर्वत उभयोरनुग्रहो भवति ।
व्रते हि पार्थं करिष्यन् भवति ।
चतुर्विँशं बहिष्पवमानँ सप्तदशस्तोमं व्रतं करोति ।
तत्र त एवोक्थानाँ स्तोमविचारा यत् सप्तदशे व्रते १३

अथ नवमः प्रपाठकः

अथ प्रतिष्ठाकामयज्ञ उत्तरः ।
स खल्वेकाहक्लृप्तः ।
ते व्याख्याताः ।
जनकसप्तरात्रे चत्वार्याहीनिकानि ।
अहानि आहीनिकतन्त्राण्यनन्तत्वात् ।
उद्धरति षोडशिनं चतुर्थात् ।
तद् व्याख्यातम् ।
व्याख्याता अर्काः ।
तेषां तदेवानुपूर्व्यं यत् त्रिरात्रे ।
धर्ता दिवः इति
उत्तम एतासु स्वयोनिः ।
द्वितीयस्याह्नः सौभरम् उक्थानां ब्रह्मसाम कुर्यादिति धानञ्जय्यः ।
त्रैककुभँ हि चतुर्थे करिष्यन् भवति ।
औपगमेवेति गौतमः ।
अतिरात्रे सौभरं करिष्यन् भवति ।
एवमुभयोरनुग्रह इति ।
षोडशिमती रात्रिरहीनन्यायेन ।
अत्रैव चतुष्टोमः षोडशिमानिति शौचिवृक्षिः ।
शम्बू पुत्रो नात्र च नेति राणायणीपुत्रः ।

पृष्ठ्यः स्तोम उत्तरस्य ।
षडहो बृहद्रथन्तरपृष्ठ्य एव ।
विश्वजिति हि पृष्थ्यानि करिष्यन् भवति ।
चतुर्थस्याह्नः ।
१ २ ३ १ २ ३
प्रत्यस्मै पिपीषते इति
गौरीवितँ षोडशिसाम ।
विराजमन्वपायँ स्वराजोपेयुः ।
पृष्ठापायाद्रेवत्योऽपयन्ति ।
तत्रैतद् दार्ढच्युतमेतद् गायत्रीसामेहकारवत् षणिधनम् ।
यथा रेवत्यः ।
विपरिहरेदौद्दणो रन्ध्र इति गौतमः ।
एवमिडारम्भणा बृहतीति ।
न विपरिहरेदिति धानञ्जय्यः ।
अपि ह्येवमजामि ।
स किमर्थो नित्यं कल्पं च्यावयेदिति ।
अष्टरात्रन्यायेन स्यात् षोडशिका रात्रिश्चातुष्टोमन्यायेन ।
अथापि कृतः षडहे षोडशीति ।
आयुष्कामयज्ञ उत्तरः ।
स यन्नवरात्रो नव प्राणाः इति ।
त्रिकद्रुकानुपदधाति छन्दोमसादृश्यात् ।
अथाप्येत ऊनस्य पूरयितारः ।
षोडशिका रात्रिः स्तोमज्ञात्रेण आषोडशिको ह्येवायुर्भवतीति ।
पशुकामयज्ञ उत्तरः ।
तत्र पञ्चाहं करोति ।
पाङ्क्ताः पशवः इति ।
यदु विश्वजितं पाङ्क्तानि पृष्ठानीति ।
त्रिकद्रुकानुपदधाति छन्दोमसादृश्यात् ।
अथाप्येत ऊनस्य पूरयितारः ।

तान् पुरस्तात् पञ्चाहस्य करोति ।
विश्वजितँ हि रात्र्युपायं करिष्यन् भवति ।
आयुषोऽनुष्टुभि बृहत् करोति ।
त्र्यहे समं बृहद्रथन्तरे युयुक्षमाणः ।
अजाम्यर्थं वैव स्याद् वार्कजम्भं वेति विचारयति ।
अथापि नैताँ स्वतन्त्राँ स्तोमविधां बृहदापद्यते ।
तत्राकूपारं तृचसमाप्तये ।
तदेतन्नवमाद् भागान्वितम् १
अथैष दशरात्रः बृहद्रथन्तरपृष्ठ एव ।
तत्र खलु विश्वजितं दशमं करोति ।
स खलु विश्वजित् क्रियमाणो दशमतन्त्रं प्रत्यूहति ।
तत् प्रत्यूहमानं पूर्वे तन्त्रे प्रत्यूहति ।
अत्र यदेवैकं पुरा सप्तमे कृततन्त्रं भवति तत् प्रच्यवते ।
अथैते षष्ठनवमयोस्तन्त्रे व्यत्यस्यति ।
षोडशाहिकैरयँ स्तोमैरभिविधीयते ।
स त्रयस्त्रिँशँ स्वतन्त्रमचिकीर्षीत् ।
तस्येतरस्थानं परीतं भवति ।
अत्र खल्वयँ सर्वो दशरात्रो नानातन्त्रो भवति ।
समूहति बार्हद्रथन्तरपृष्ठान् नित्याभि ।
अनित्यो ह मात्रायामकरिष्यत् अनित्यो ह्ययं दशरात्र इति ।
नित्यास्तु चतुर्थपञ्चमयोर्जगत्योः ।
याश्चतुर्थे नित्याः सप्तमेऽहनि ताः करिष्यन् भवति ।
अतो नित्याः करोति ।
तद्वशेन पञ्चमे कुशलं यदनित्याः ।
त्रिष्टुभो नित्याः ।
नित्या एवाचिकीर्षीदित्यपरम् ।
नित्ये तन्त्रेऽनित्यौ स्तोमौ ।
तत्र नित्यानित्या अभिरूपाः ।

यदु षष्ठी उभयोरनित्या ।
उभयँ ह्येव तत्रानित्यँ स्तोमश्चैव तन्त्रं च ।
नित्यास्तु परयोरह्नः ।
नित्याभिर्ह्येतस्य त्र्यहस्य समूहः ।
नित्यास्तु नवमे ।
अन्तर्विधा हि दाशमिक्यः ।
विश्वजित्यन्तर्विधाः करिष्यन् भवति ।
तत्र कुशलं यज्ञयोतिष्टोम्यं करोति ।
तन्त्रान्विते च पृष्ठान्विते च ।
अथ खलु दीर्घतमसोऽर्कमष्टमेऽहनि करिष्यन् भवति ।
अन्तसामान्त इति ।
तन्त्रस्थः स्वाशिरामर्कः ।
सप्तमे त्रय एव एकोऽग्नेरर्कस्तन्त्रापेतः ।
तन्नवममहर्भवति २
अथ द्रव्यसमुद्देशः ।
यानि यथास्थानं व्याख्यातानि तानि यान्ययथास्थानं तैरेवाष्टभिः पर्यायैस्तेषामन्वयँ समन्वीक्षेत ।
नाना ब्रह्मसामानि नानात्वार्थः ।
श्यैतनौधसवर्णानि बार्हद्रथन्तरपृष्ठ्यान्नानाग्निष्टोमसामानि नानात्वार्थः ।
ऐडानि भूयिष्ठानि करोति ।
सामान्तस्य स्थानेऽन्तसामान्तम् ।
अथाप्येष तृतीयसवनसामान्तः ।
तमदिदर्शयिषीन्नानाच्छन्दसि ।
एवंभूयो नानात्वमिति ।
तानीमानि सप्त छन्दाँसि नवाहं नानुभवन्ति ।
तत्र ककुभं च विराजं चोपप्रयुङ्क्ते ।
सा प्रायात् तानि कुशलं यद्रोहेण प्रयुङ्क्ते ।
२ ३ १ २ ३
अग्न आयूँषि पवसे इति

प्रथमेऽहनि करोति ।
कस्य हेतोरिति ।
शुशुत्सद्यज्ञोऽयं भवति ।
सैषाग्नेयी पविताभिव्याहारा शुद्ध्यर्थेऽभिरूपा ।
अथापि शश्वदिहाग्निष्टुतं तैत्तिरीया अधीयते ।
सैषाग्निष्टुदनुग्रहाय स्यात् ।
स्वादिष्ठामार्भवीयामेषा स्वादुमती पविताभिव्याहारा शुद्ध्यर्थेऽभिरूपा ।
अथाप्यैकाहिकी भवति ।
अथ खल्वत्र पौष्कलं भवति ।
शुद्धस्यैतद् भवति यत् पुष्कलमिति ।
अथाप्यैकाहिकमेकाहसमासँ शश्वदिह तैत्तिरीया अधीयते ।
नाना मध्ये निधनानि न दाशरात्रिकाणि ।
मध्ये निधनान्यनु भवन्ति ।
अतश्छन्दस्यान्युपप्रयुङ्क्ते ।
आ सोम स्वानो अद्रिभिः इति
तृतीयस्य बृहती सप्तदश साध्यासां करिष्यन् भवति ।
अत एतां करोति ।
एषा सामन्या तृचप्रथमा तृतीयस्थानेति ।
बभ्रवे नु स्वतवसे इति ।
षडृचँ षष्ठसप्तमयोर्विहरति ।
सन्तानार्था नवर्चम् ।
एतस्य प्रथेमऽहनि तृचं कृतम्
उपास्मै गायता नरः इति ।
व्रत्यँ सप्तमस्य समूढाज्यम् ।
एतत् स्थानसम्मितम् ।
छन्दस्ये उत्तरयोः ।
एते रूपसम्पन्ने इत्येते रूपसम्पन्ने इति ३

इति पञ्चमः पटलः

अथैष कुसुरुबिन्दः ।
तत्र खलु बृहद्रथन्तरे करोति ।
राथन्तरबार्हता ह्येते स्तोमा इति ।
कानि तन्त्राणीति ।
दशरात्रस्तोमविकृत इत्येके ।
द्वैपृष्ठ्याद् द्वे तन्त्रे स्यातामित्याचार्याः ।
प्रथमद्वितीययोरिति शौचिवृक्षिः ।
एते आहीनिक इति ।
तद्विदं प्रथमतन्त्रं प्रवतीभिः क्लृप्तमपरूपम् ।
अन्यत्रोपक्रमाद् व्यत्यसिष्यँस्तु भवति ।
तस्य स्थाने ज्योतिष्टोमं करोति--प्रथमस्य प्रथमँ राथन्तरस्य राथन्तरमिति ।
एकाहिके इति धानञ्जय्यः ।
एवमपर्वविलोप इति ।
तद्विदं गोस्तन्त्रमन्तविधाभिः क्लृप्तमपरूपम् ।
अन्यत्रान्ताद्व्यत्यसिष्यँस्तु भवति ।
तस्य स्थाने द्वितीयतन्त्रं करोति--
द्वितीयस्य द्वितीयं बार्हतस्य बार्हतमिति ।
स खलु दशमेऽहनि द्वितीयतन्त्रमुद्धृत्य तस्य स्थाने ज्योतिष्टोमं करोति एकाहतन्त्राद्रात्रिमुपजिगमिषन् ।
उक्तो द्रव्यागमः ।
समेषु स्तोमेषूभयोस्तन्त्रयोः पुनानां बृहतीं करोति ।
उभयोर्ह्येषा नित्येति ।
उष्णिक्ककुभौ वा ।
अपि समाने भवत इत्यपरम् ।
द्विरात्रन्याय इवेह भवति ।

द्वैतन्त्रेण द्वैपृष्ठ्येन ।
तत्र द्वैरात्रिक्य उष्णिक्ककुभः करोति ।
अथ यत्र राथन्तरस्याह्नस्तृचार्थो भवति तद्यथादश्चतुर्वीरे व्याख्यातं तथा तत्र भवति ।
बार्हतेष्वहस्सु यौक्ताश्वहाविष्मते अग्निष्टोमेषु हाविष्मतमौक्ष उक्थेषु मौक्षमुक्थसामेति ।
विभक्तान्युक्थानि ।
राथन्तराणि राथन्तरेषु ।
बार्हतानि बार्हतेषु ।
तदेवार्काणाँ स्थानं यद्दशरात्रे तयोः सत्रगतयोर्बार्हतस्य कविमन्तं पर्यासं करोति ।
कालेयमच्छावाकसाम ।
अभिप्लवन्यायेनैकविँशोऽतिरात्रः ।
य एकस्तोमानामुत्तमस्तस्य स्तोमान्वयी षोडशीत्यविचारमेकविँशः ४
अथैष छन्दोमवान् बृहद्रथन्तरपृष्ठ एव ।
तत्र खलु विश्वजितं दशमं करोति ।
स खलु विश्वजित् क्रियमाणच्छन्दोमान् प्रत्यूहति ।
ते प्रत्यूहमानाः षष्ठमहः प्रच्यावयन्ति ।
पृष्ठ्यावलम्बस्य पञ्चाहः प्रथमस्याह्नः प्रत्नवद्बहिष्पवमानं पञ्चमस्याह्नः ।
१ २ ३ २ ३ १ २
असृक्षत प्र वाजिनः इति
अनुरूपः इति शाण्डिल्यायनः ।
उपरिष्टादिमं नवर्चमावर्तयिष्यन् भवति ।
कथमकृतस्यावर्तनँ स्यादिति ।
नवाहयोगा इमा भवन्तीति धानञ्जय्यः ।
कथमसमापयिष्यन्नवाहं नवाहयोगाः कुर्यादिति ।
व्याख्यातः समूहः ।
३ १ २ ३२
ऋतावानं वैश्वानरम् इति
होतुराज्यम् ।

वैश्वानरीयस्य स्थाने वैश्वानरीयः ।
त्रैककुभे उत्तरयोः ।
एते रूपसम्पन्ने इति ।
उद्धरति कण्वरथन्तरम् अजामि ह भवति ।
तत्रैतत् सोमसाम ।
एवमिडारम्भणा बृहतीति ।
गौरीवितापायात् पृथक् स्वाराणि करोति नानासाधुरहीन इति ।
स यदेतान्येतानि रूपसम्पन्नानीति ।
प्रथममात्रेयं नमसोपहत्यैतदु बृहद्द्योनि बार्हतेऽहनीति ।
स्थानसम्मिते उत्तरे इति ।
एते रूपसम्पन्ने इति ।
स्वाराणि त्रैककुभानि माध्यन्दिनान्त्यान्येतानि रूपसम्पन्नानीति ।
ऐडानि जागतान्यार्भवान्त्यानि ।
इडाभक्तयो हि छन्दोमा इति ।
स यदेतान्येतानि राथन्तरबार्हतेडानीति ।
नवमेऽहनि दीर्घतमसोऽर्कमनुकल्पयन्त्येके ।
अहर्ज्ञात्रेण स यदनुष्टुभि ।
एतदस्य समूढे वा न भवति ।
तन्त्राकूपारं तृचसमाप्तये ।
अथ येनानुकल्पयन्ति बृहत्यां वानुक्लृप्तं मन्यमानाः ।
यथा वैतदग्नेरर्कः ।
सप्तमेऽहनि कृताकृत इति समापद्यते ।
दशमेऽहनि  सामानि समूहद्वाजजित् द्विपदास्वनुगृह्णाति संयुक्तमेतेनाह्ना भवतीति ५
कथं दशमधर्माः मानसमिति
कर्तव्या इत्येके ।
तद् वाहर्ज्ञायत इति ।
अकर्तव्या इत्यपरम् ।

ऋचसमास्ततहिवैनानुकल्पयन्ति ।
बृहत्यां वानुक्लृप्तं मन्यमानान् दशमं च ।
लुब्धश्च दशरात्र इति ।
अथास्य कृतेन विश्वजिता मानसमध्यशाययिष्यत् ।
अथाप्यनुष्टुप्संयोजनास्ते ।
जागतमिदँ स्थानं भवति ।
अथापि सत्रोत्पादास्ते ।
अहीनोऽयं भवतीति ।
अभिचर्यमाण यज्ञ उत्तरः ।
स खल्वेकाहक्लृप्तः ।
ते व्याख्याताः ।
तस्य सवनभाजः स्तोमाः सवनवद्भाजो वेति विचारयन्ति ।
एवँ सवनस्तोमाः सम्प्रयुक्ता भविष्यन्तीति ।
उक्थ्यसँस्थं ज्योतिषं बृहत्पृष्ठं बार्हतं तन्त्रम् ।
द्वितीयँ हि स्थानमापन्नमिति ।
तत्र यो द्रव्यविकार उक्थ्यत्वाच्च बृहत्पृष्ठत्वाच्च स भवति ।
अपि च समन्तँ समन्तीकाराय ।
अथात एकादशरात्रः ।
दशरात्रान्ता अहीनाः ।
द्वादशाहप्रभृतीनि सत्राणि ।
किमेकँ स्थानमन्तरीयमिति वा ।
एकादशरात्रं करोति ।
पृष्ठ्यावलम्बस्य पञ्चाहः पृष्ठ्यस्तोमस्य षष्ठमहः इति ।
पयसा षष्ठमहरभ्यासं धृतिस्वरादुक्तं पयोधा ।
अप्येवं द्वे बृहत्यौ स्वराबुक्तौ बृहतीति ।
पुनः कण्वरथन्तरे स्वं लोकमेति ।
अजाम्यर्थं व्याख्याताः छन्दोमाः ।
दशमस्य स्थाने चतुष्टोमं करोति ।

कस्य हेतोरिति ।
छन्दोमस्य छन्दोममेत्यग्निष्टोमस्यात्यग्निष्टोमँ स रथन्तरपृष्ठो
ज्योतिष्टोमतन्त्रो यथा दशममहरिति ६
अथ दशमयज्ञम् मानसमिति ।
अकर्तव्या इत्येके ।
स्वेन नामधेयेनैकाह आदिश्यते ।
चतुष्टोमोऽग्निष्टोमः इति ।
अथापि न दाशमिकं लिङ्गं दृश्यते ।
यथैतद् बहिष्पवमान्स्यावृत्तिः साम्नां विप्रच्यावनमनुष्टुभः
परोद्मीचिकीर्षेति ।
कर्तव्या इत्याचार्यः ।
येऽन्ये मानससंयुक्ताः सँस्थापनीयं तन्मानसं चतुष्टोमोऽग्निष्टोमः इति ।
अथाप्यकृतेन विश्वजिता मानसमध्यशाययिष्यत् ।
अथापि सत्रोत्पादं नाहीनकृतावचिकीर्षीत् ।
दृश्यते च दशममृते मानसात् तथा मानसमृते दशमात् ।
न चैतद् दशमस्य यथा व्याख्यातम् ।
दशमसँयोजनास्तु कर्तव्याः ।
एष आचार्यसमयः ।
अथापि तन्त्रमहर्ज्ञात्रि बलिष्ठं ब्रुवते उद्घाता स्वादिष्ठे दाशमिक्यौ दृश्येते ।
अथापि स्थानेन भागागमेन तन्त्रोपधिना छन्दोम्येनेति ।
स चैव चतुर्विँशो दाशमिकोऽन्ते दृश्यते ।
यद्वेतत् स्वेन नामधेयेनैकाह आदिश्यते इति बहुधैकाहः स्वेन
नामधेयेनादिश्यते ।
यथैष एवाश्वत्रिरात्रेऽभिप्लवे च त्रिकद्रुका इति ।
अथैनानाहीनिकतन्त्रान् ब्रूमहे ।
यथो एतन्न दाशमिकं लिङ्गं दृश्यत इति दृश्यत इति ब्रूमः ।
यथा व्याख्यातमस्थानं तु सामव्यूहस्य समूढो दशरात्रः ।
दृश्यते च बहिष्पवमानस्यानावृत्तिः ।

अन्यासु चानुष्टुप्सु दशमतन्त्रं यथा त्रिककुभः ७
तत् किम्प्रभृतयोऽहीना इति ।
उक्थप्रभृतय इति बह्वृचाः ।
तिस्रो मुहूर्तमात्रा अग्निष्टोमे स्तुतशस्त्रैर्नाभिविधीयन्ते ।
ता अद्यापि विधीयन्ते इति ।
शश्वदङ्गषोडशिप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागः प्रथमँ स्थानं लभते ।
सर्वे भागा आप्यन्ते सर्वे भक्ताः ।
यः स पुराहीनो भवति सोऽद्याहीन इति ।
शश्वदङ्गातिरात्रप्रभृतय एव भवन्ति ।
सर्वमादित्यचरितमभिविधीयते ।
उभौ वर्णौ प्रकृतिरेव ।
अत ऊर्ध्वं शश्वदङ्गद्विरात्रप्रभृतय एव भवन्ति ।
द्वे पृष्ठे चर्यां लभेते ।
द्व्यान्यहानि राथन्तरबार्हतानीति ।
तदिदं बृहदतिरात्रे स्थानं तदन्यस्थानं लभत इति ।
शश्वदङ्गत्रिरात्रप्रभृतय एव भवन्ति ।
एवमहर्भाजोऽहःसवनभागाः ।
स्वस्थानातिरात्रावनुष्टुबिति ।
शश्वदङ्गचतूरात्रप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागोऽहर्भजते ।
यथा पूर्वे भागा इति ।
शश्वदङ्गपञ्चरात्रप्रभृतय एव भवन्ति ।
शुध्यत्युहैतच्चतुर्थमहः पञ्चमेऽहनि ।
शश्वदङ्गषड्रात्रप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागो भूयिष्ठभाग् भवति ।
शश्वदङ्गसप्तरात्रप्रभृतय एव भवन्ति ।
आसप्तान् नानात्वान्निवर्तन्ते नानासाधुरहीन इति ।

शश्वदङ्गाष्टरात्रप्रभृतय एव भवन्ति ।
शुध्यत्युहैतत् सप्तममहरष्टमेऽहनि रात्रिः सञ्जत इति ८
अथायं द्वादशाहोऽहीनो भवती३ सत्रमिति ।
अहीनो भवतीत्याहुः ।
एको दीक्षेतेति भवति ।
अथाप्याहीनिकान्यहानीत्याचक्षते ।
दाशरात्रिकाण्यहानि ।
अथाप्याह--यद्गौरीवितेनाहीनानीति ।
अथाप्याह--यजमानमेवैतया वर्द्धयन्ति इति ।
अथापि वैरूपे वदति--यजमानं वानुप्रतितिष्ठन्तमुद्गाता प्रतितिष्ठतीति ।
अथाप्यस्मिन् दक्षिणाप्रवादो भवति ।
ध्वस्ने वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैतदश्विभ्याँ सहस्राण्यदित्सताम्
इति ।
दक्षिणावन्तोऽहीना इति ।
अथापि शश्वदनेनाध्वर्यवो याजमानं परिचक्षते ।
यथाहीनेनेति ।
सत्रमित्यपरम् ।
उभयतोऽतिरात्रो भवति ।
अन्यतरतोऽतिरात्रा अहीनाः ।
समाहितः प्रायणीयोदयनीयो भवति ।
व्याहितप्रायणीयोदयनीयाः ।
अथाप्यन्वहं गौरीवितो भवति ।
नानास्वरा अहीनाः ।
अथाप्यस्मिन् सत्रवादरूपो भवति ।
यो वै देवानां गृहपतिं वेदसत्रे गृहपतिर्भवति ।
भारद्वाजायना वै सत्रमासत ।
स्तोमो युज्यते सत्रियेभ्यो गर्भः प्रतिष्ठायैव सत्रमासते ।
अङ्गिरसो वै सत्रमासत ।

गौपायनानां वै सत्रमासीनानां सतः सत्रादुदस्थाना३ स्थिता३दिति ।
उभयं भवतीति लामकायनः उभयथा ब्राह्मणं भवति ।
उभयथेष्टं वेद यत उभयेषामयं प्रत्ययः ।
तद्येऽस्मिन्नहीनवादाः प्रत्ययत्वात्ते भवन्ति ।
सत्रं तु भवति ।
सत्रकारोऽस्य भवति ।
नैवाहीनेन सत्रमित्यपरम् ।
तदप्येवमिव ब्राह्मणं भवति--अन्यस्मै वै कामाय सत्रम् अन्यस्मै यज्ञो न तत् सत्रेणाऽऽप्नोति यस्मैकं यज्ञो न तद् यज्ञेनाऽऽप्नोति यस्मैकँ सत्रम् ।
इति ।
तद्यथाश्वत्थलो वृक्षो नैवाश्वत्थ इति वदनायनः ।
अनश्वत्थ इति ।
त्रयोऽहीना इति धानञ्जय्यः ।
एकाहाहीनोऽहीनाहीनः सत्राहीन इति ।
अयं ज्योतिष्टोमोऽतिरात्रः षोडशिमानेकाहाहीनः ।
अत्र हि न किञ्चनैकाहिकं कर्म हीयत इति ।
द्वादशाहोऽहीनाहीनः ।
किञ्चनाहीनिकमहर्हीयत इति ।
गवामयनँ सत्राहीनः ।
अत्र हि न किञ्चन सात्रिकमहर्हीयत इति ।
तदिदं कुशलोद्दिष्टमिति शाण्डिल्यायनः ।
यस्य स्यादहीनादहीन इति यस्य तु स्यादहर्वर्तयेति द्विरात्रात् प्रभृतयस्तस्याहीना इति ।
तदपि शश्वद् ब्राह्मणं भवति ।
प्रजापतिर्यज्ञक्रतूनसृजत ।
अग्निष्टोममुक्थ्यँ षोडशिनमतिरात्रम् ।
तमेते द्विरात्रप्रभृतयोऽहर्गणा ब्रुवन् ।
तस्मान्नापि महासीरिति ।

तस्मादेतेऽहीना इत्यहीना इति ६

इति षष्ठः पटलः

अथातः सत्राणि ।
तेषां द्वादशाहः प्रथमः ।
तस्मिन्नुपकृतानि ।
तत्र द्वे उपधिस्थानेऽन्तरेणातिरात्रौ च दशरात्रं च यत्रैकेनाह्नार्थो भवतीति
।
व्रतमाहरति एतदेकार्थे दृष्टमिति ।
तस्य तदेव स्थानं यत् संवत्सरे द्व्यहार्थे गोआयुषी ।
तयोस्तदेव स्थानं यत्संवत्सरे त्र्यहार्थे त्रिकद्रुकाँश्चतुरहार्थे व्रतचतुर्थान्
पञ्चाहार्थेऽभिप्लवपञ्चाहँ षडहार्थेऽभिप्लवः सम्प्लवते ।
एतेन न्यायेनैष एवोत्तरकल्पः क्रमते ।
आचत्वारिँशद्रात्रादुपचीयमानेष्वहस्सु रोहेणोपचयः प्रवर्त्तते ।
एतँ रात्रिसत्रन्याय इत्याचक्षते ।
यदेवापवदति तद् व्याख्यास्यामः ।
तत्रास्मिँस्त्रयोदशरात्रे कथं व्यूहसमूहौ ।
समूढः स्यादित्येके ।
समूढो ह्येनँ सर्वस्तोमोऽन्ववैतीति ।
व्यूढः स्यादिति गौतमः ।
अनादिष्टः कल्पेन समूढः ।
अथापि छन्दोयोगपर्वणि भागसमाप्तौ चोपधीयते ।
अथापि कृत्स्नोऽयं दशरात्र इति ।
व्यूढमेवैनँ सन्तँ समूढः सर्वस्तोमोऽन्ववैतीति ।
अथापि नादेक्ष्यत् सोमसाम गौरीवितस्यादेक्ष्यत् ।
कथं दशमधर्मा मानसमिति ।
अकर्तव्या इत्येके ।
दशमं च लुब्धश्च दशरात्र इति ।

कर्तव्या इति गौतमः ।
अनाकृतेन व्रतेन मानसमाधिनाप्यते ।
अथापि वाचो दशक्रमं मन उपकृतं कृत्स्नोऽयं दशरात्र इति ।
चतुर्दशरात्रे पृष्ठ्यँ रूढावृत्तं करोति ।
सैषा मध्यावृत्तिः ।
यत्रातिरात्रात्पृष्ठ्यमुपयन्ति प्रथमस्याह्नोऽस्य प्रत्नानुरूपः इति अजाम्यर्थः ।
अथ खल्वत्र त्रयस्त्रिँशे अहनी सन्निपततः ।
केनाजामीत्यह्न एव सामान्यात् ।
अपि वा कण्वरथन्तरमनुकल्पयेत् ।
पूर्वस्याह्न आर्भव उत्तरस्य वा मध्यन्दिने पृष्ठ्य उत्तरस्य विषुवत्
स्थानीयो व्रतं पञ्चदशरात्रस्य ।
पृष्ठ्य एवोत्तरस्य तत्राग्निष्टुतमुपदधाति ।
क्षत्रप्राये ब्रह्मस्थानवच्चिकीर्षान् ।
तस्य
३ २ ३२३ १ २ ३
अग्निः प्रत्नेन जन्मना इति
होत्युराज्यमजाम्यर्थम् ।
व्याख्याता अन्यतोऽतिरात्राः १०
न्यायक्लृप्तमासप्तदशरात्रात् ।
सप्तदशरात्रेऽभिप्लवपञ्चाहः सम्प्लवते ।
ते खलु स्वतन्त्रा एव त्रिकद्रुकाः स्युरित्येके ।
यावत् षड्कान्नेयुः षडेव सतस्तन्त्राण्यापादयेयुरिति ।
आपादयितव्याँस्तन्त्राणि मन्य इति गौतमः ।
अहर्गणप्रत्यवायो ह्येवमभविष्यत् ।
त्र्यहाद् द्व्यहम् ।
एवमिव ब्राह्मणं भवति--अनन्ता वा एता यत् पञ्चाहविधाः इति ।
अन्ताहर्ह्यतः षष्ठमुपैतीति ।
स वै पञ्चाहतन्त्र एवाभविष्यन्न षष्ठात् किञ्चित् प्रत्याहरिष्यदिति ।
प्रत्याहरेदिति गौतमः ।

एवमिव ब्राह्मणं भवति--पञ्चमेऽहनि षष्ठस्याह्नस्तृतीयसवनं प्रत्याहरति ।
षडहाविलोपाय स त्वेव स्तोमो यः पञ्चमस्य ।
सा वा सँस्था रथन्तरबृहत्पृष्ठः ।
प्रथमस्याह्न एष प्रत्नानुरूपः इत्यजाम्यर्थः ।
व्यावृत्तये पृष्ठ्याभिप्लवयोः श्यैतनौधसब्रह्मसामा पौष्कलश्रुध्यौष्णिहाः
अभीवर्तसुज्ञानयोरन्वपायँस्वासु ।
श्यैतनौधसेऽभीवर्तकारिता हि प्रगाथा इति ।
एतेनैवोत्तरे व्याख्याताः ।
षाष्ठिकानि पञ्चमस्याह्न उक्थानि ।
तत् कुशलमुद्धरति शून्यं द्विपदा अनन्तेनाचिकीर्षीत् ।
तत्रैतदैद्धमवाहं नवमादन्तान्वितम् ।
तद्यदेतासु यजिष्ठं त्वा ववृमहे इति ।
एता आपन्नाः पञ्चममहर्भवन्तीति ।
सौश्रवसं मारुतं वेति विचारयन्ति ।
वैभक्तँ सौश्रवसं पाञ्चमिकं मारुतम् ।
अथ यत्राभिप्लवो रात्रिसत्रेषु कथं कल्पविचारितानीति ।
अकर्तव्यानीति शौचिवृक्षिः ।
नान्यत्र संवत्सरात् न संवत्सरसम्मितासु च नेति ।
कर्त्तव्यानीति गौतमः ।
यावन्ति यावन्त्यभ्यश्नुवीत विहितान्यप्रतिषिद्धानि ।
अथाप्येवमाप्तितरा संवत्सरस्येति ।
विँशतिरात्रे द्व्यहार्थे सति विश्वजिदभिजितौ करोति ।
कस्य हेतोरिति ।
सम्पूर्णं विराजँ सत्रमुपकृतम् ।
तावेतौ वैराजौ चापि च सम्पूर्णौ स्तोमैः पृष्ठैरिति ।
तौ यदत्रैव पृष्ठ्यमात्रौ तौ पृष्ठ्यादनन्तरिताविति ११
पूर्वस्मिन्नेकविँशेऽतिरात्रे तृतीयोऽभिप्लव आवृत्तो भवती३ अनावृत्त इति ।

अनावृत्त इति शौचिवृद्धिः ।
न ह्यावृत्तिर्विज्ञायते ।
अथापि कथँ सप्ताहो विषुवान् स्यात् ।
आवृत्त इति गौतमः ।
रोहप्रत्यवरोहौ सत्रमुपकृतो विषुवानिति ।
यद्वेतदनादिष्टावृत्तिरिति नाभिप्लवस्यावृत्तिः क्वचनादिश्यतेऽर्थ एवावर्तयतीति ।
यद्वेतत् कथँ सप्ताहो विषुवान् स्यादिति दृश्यते षडहो विषुवत्स्थाने चतुर्दशरात्रे तथा सप्ताहः सँसत्स्विति ।
अथापि यदनावृत्तोऽभविष्यदतिरात्रोऽभिप्लवः षडहोऽतिरात्रः द्वावभिप्लवौ षडहावतिरात्रः इत्यभविष्यदिति ।
रूढावृत्ताविति त्वेतौ नानादिशति ।
उक्थ्यान्युत्तरस्मिन् स्वरसाम्नो ब्रुवते ।
पृष्ठ्योपधानात्तत्र तान्येव द्विवचनानि यान्येकविँशत्यहःकारिणाम् ।
श्यैतनौधसब्रह्मसामानः स्वरसामानः पौष्कलश्रुध्यौष्णिहाः विषुवतः सामतृचस्य लोक आभीशवम् ।
अभीवर्तापायात्
श्रायन्त इव सूर्यम् इति ।
विकर्णमिन्द्रक्रतोरपायात् न्यायक्लृप्तमा सँसद्भ्यः ।
सँसत्सु पृष्ठ्यं विषुवत्स्थानीयं करोति ।
अनिरुक्तं च त्रयस्त्रिँशम् ।
तं खलूत्तरस्य त्र्यहस्य स्तोमैरभिविधत्ते वैषुवतीयमत्याधित्सन् ।
स एष आवृत्तः स्तोमः पूर्वस्त्र्यहः ।
अनुपूर्वस्तोम उत्तरः ।
एतं विशालः पृष्ठ्य इत्याचक्षते ।
पृष्ठ्यस्तोमं पुरस्ताच्चोपरिष्टाच्च रूढावृत्तमनिरुक्तं सप्तमं मात्रासम्पूरणायैकाहम् ।
तत्रानुष्टुभि बृहत्करोति ।

अजाम्यर्थोऽथापि व्रतस्थानो भवति ।
औपोत्तमादुभयसामव्रतमिति १२
न्यायक्लृप्तमा त्रयस्त्रिँशद्रात्रात् ।
तत्तत् पञ्चाहविहितम् ।
तत् कतमोऽयं पञ्चाह इति ।
पृष्ठ्यस्तोमः पञ्चाहः इति कापर्दयः ।
अनादेशे कमन्यं प्रतीयाम् ।
अथापि यत्र यत्र त्रैकद्रुको भवति आदिशत्येवैनं तत्र तत्र ।
अथाप्याह--नानाब्रह्मसामान्युपयन्ति इति ।
एष नानाब्रह्मसामा भवति ।
अथापि दाशरात्रिकैरहोभिः पञ्चाहान् सँवर्णयन्तीति
पृष्ठ्यस्तोमपञ्चाहत्वादेव ।
अथाप्याह--त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति इति ।
त्रिवृत्प्रथमं दाशरात्रिकम् ।
तदेवावृत्तस्योदयनीयं भवति ।
अथापि विश्वजिता जानीमः ।
विश्वजिद् ह्युत पृष्ठ्याविलोपानन्ववैतीति ।
स वै नूनमभ्यासक्तो ह्यहीनेष्वनभ्यासक्तं तु मन्यामहे ।
न हि विज्ञायतेऽभ्यासङ्ग इति ।
अभिप्लवपञ्चाह इति गौतमः ।
आदिष्टः कल्पेन भवति ।
अथापि न पृष्ठ्यपञ्चाहः कृतः ।
अकृतो विश्वजितेन पृष्ठ्यस्तोमपञ्चाहः ।
अभिप्लवपञ्चाहस्तु विद्यते ।
तं कृतवदतिक्रामति ।
अथापि कृत्स्नावेव पृष्ठ्यस्तोमौ नाभिप्रयोगं लभेते ।
कुतो विलुप्तौ लभेयातामिति ।
अथापि शश्वदेकेऽध्वर्यवोऽभिप्लवपञ्चाहमादिशन्ति ।

अथापि कालबविनो व्यूहेनादिशन्ति ।
अतिरात्रो ज्योतिर्गौरायुः पञ्चाहः ।
स द्वितीयः स तृतीयो विश्वजिदतिरात्र इति ।
यद्वेतदनाडेश इति आदेशजातिरेषा भवति यदधिकारः ।
यद्वेतद्यत्र यत्र त्रैकद्रुको भवति आदिशत्येवैनं तत्र तत्रेति पृष्ठ्यस्तोमपञ्चाहो वाऽथादिश्यते पृष्ठ्यावलम्ब उत्तरे नवरात्रे छन्दोमवति दशरात्र इति ।
यद्वेतत् नानाब्रह्मसामान्युपयन्ति इति कारणकारितमेतद्भवति ।
यद्वेतद्दाशरात्रिकैरहोभिः पञ्चाहान् सँवर्णयन्तीति सङ्ख्याभिप्रायेण तदाह--
द्वौ पञ्चाहौ दशरात्र इति ।
यद्वेतत् त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति इति
उत्तम एतत्त्रयस्त्रिँशद्रात्रेऽभिनन्दाब्राह्मणं वदति--त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टात् इति ।
यद्वेतद्विश्वजिता जानीम इति नेह पृष्ठ्यार्थेन विश्वजिदागच्छति विषुवदर्थेनैष आगच्छतीति ।
नाना ब्रह्मसामान्युपयन्ति इति ।
यद्धि पृष्ठथयोरनुव्यत्ययँ श्यैतनौधसे व्यत्यहरिष्यद् भूयान् व्यत्यय आकाङ्क्योऽभविष्यत् ।
प्रतिपदामाज्यानामौष्णिहयोरिति श्यैतनौधसवर्णानि ।
बार्हद्रथन्तरपृष्ठ्याद्यदु विश्वजितं विषुवन्तमितो यदपैति तस्यैतस्मिन्ननुग्रह इति १३

## अथ दशमः प्रपाठकः

३ २३ २ ३२ ३१
अग्निर्मूर्धा दिवः ककुत् इति
उक्थप्रणये करोति ।
कस्य हेतोरिति ।
सामन्या मूर्धन्वती वैषुवतीयेऽभिरूपा ।
तत्रैतत् सत्रासाहीयमापन्नं च विश्वजितम् ।

अपि च वैषुवतीयम् विषुवत्युभे षोडशिसामनी करोति
वैषुवतीयमन्याधित्सन् ।
उत्तमः पञ्चाह आवृत्तो भवती३ अनावृत्तः इति तद्व्याख्यातम् ।
पूर्वस्मिन्नेकविँशतिरात्रे सत्रमास उत्तरम् ।
तत्रैते समस्य निदधाति ।
एकविँशतिरात्रं च द्वादशाहं च ।
एते नानात्वक्लृप्त इति ।
पञ्चाहक्लृप्तमुत्तमम् ।
प्रथमे विषमयुक्ताः पञ्चाहाः ।
तत् पञ्चाहानेव करवाणि ।
एवं पक्षयोः समाधिरिति ।
तत्र कथं बृहद्रथन्तर इति ।
यथा लोकमेव ।
नहीह तद् ब्राह्मणमिति ।
कथमु ब्रह्मसामनीति ।
श्यैतनौधस एव ।
नहीह तद्ब्राह्मणमिति ।
यस्य स्यात् स एवायं पञ्चाह इति ।
तथैव तस्य बृहद्रथन्तरे तथा ब्रह्मसामनीति ।
ते चेद्यथालोकबृहद्रथन्तराः प्रथमस्य प्रथमस्याह्न एष प्रत्नानुरूप
इत्यजाम्यर्थः ।
यद्यु वा अयथालोकबृहद्रथन्तराः प्रथम एव ।
अथोपरिष्टाद्यद्यु ह यथालोकबृहद्रथन्तराः उत्तमे बृहन्निधनं
वार्कजम्भमनुकल्पयेत् ।
यद्यु वा अयथालोकबृहद्रथन्तरा उत्तम एव ।
अथ खल्वाह यद् विश्वजिति छन्दोमानुपयन्ति इति ।
कस्येदं ब्राह्मणं स्यादिति ।
षाडहिकानां समस्तानामिति ।

चतुरावृतामिति ।
छन्दसामिति ।
त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति इति ।
त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टात् इति ।
न्यायक्लृप्तमाविधृतिभ्यो न्यायक्लृप्तमाविधृतिभ्यः १
इति सप्तमः पटलः

अथैता विधृतयो भूतानां विधारिण्यः ।
तत्रैतानहर्गणान् करोति ।
त्र्यहँ षडहं दशाहं द्वादशाहमिति ।
तानतिरात्रैर्विधारयति ।
एवँ सर्वमेव विधृतं भविष्यतीति ।
कानि तन्त्राणीति ।
दशरात्रस्तोमविकृत इत्येके ।
ज्योतिष्टोम इति शौचिवृक्षिः ।
अनादेशे कमन्यं प्रतीयाम ।
अथाप्याह--ज्योतिष्टोमस्याऽयनेन यन्ति इति ।
शतसँवत्सरे ज्योतिष्टोमेन यन्तीति वैतदवोचदिति ।
कौसुरुबिन्द इति गौतमः ।
एते कल्पेनादिष्टे भवतः ।
इहोत तदभिरूपतरं यथोच्चाहीने सत्रे ह्येव समासोऽभिरूपतरः ।
यथोच्चाहीन इति ।
व्याख्यातानि सन्धिषामानि ।
एवं चेत् सन्धिषाम स्यात् ।
कौत्सस्य लोक उद्वँशीयम् ।
एतेनेडाकामश्च सिध्यत्यजामिकल्पश्चेति ।
तद्यदेतासु
१ २ ३ १ २
आ त्वा विशन्त्विन्दवः इति

एता रात्रेर्विकृतौ दृष्टा इति नित्यासु वेति विचारयन्ति ।
अर्थकारितमुद्वँशीयम् ।
स किमर्थो नित्याश्च्यावयेदिति ।
पञ्चदशानां दशमस्य नानदँ षोडशिसाम ।
एवं छन्दसामनन्तरं यस्तदु सन्धिषामैव भवति ।
यथौशनकावे समाचारयिष्यत्—यथा रथन्तरापचित्या रथन्तरँ सञ्चरते ।
अथापि कावं तृतीयसवनेन समधिचारयिषीत् ।
तद्वशेनौशनम् ।
तत्रैते वैश्वज्योतिषवासिष्ठेऽपुरस्तात् स्तोभे पदानुस्वारे यथौशनकावे ।
एकविँशेष्वर्कान् करोतीत्यन्तपर्ययिणो हि स
यन्नवमप्रभृतिष्वन्तपर्ययित्वादेव ।
अथाप्येते सप्तमप्रभृतिषु दशरात्रे दृष्टाः उपपन्नं द्वादशाहे नवमप्रभृतिषु प्रयुज्येरन्निति ।
कावस्यर्च्चु दीर्घतमसोऽर्के एतासाँ स्थानमापन्नो द्वादशेऽहन्युत्सेधनिषेधौ करोति दशमादन्तान्वितौ ।
यमातिरात्रः स चादित्यानामष्टावतिरात्रान् करोति अष्टौ यमा आदित्या इति ।
आदित्यानां द्वन्द्वदर्शनादभिप्लवातिरात्राणां द्वन्द्वानि करोति ।
अथ खल्वायुष्टोमे चाभिजिति चाजामिकल्पे सौभरं करोति ।
तत्खलु हारिवर्णस्यर्च्चु करोति ।
एतासाँ स्थानमापन्नमिति २
अथैता आञ्जनाभ्यञ्जनाः प्रजापतीप्सामुपकृताः ।
तत्र सर्वस्तोममुपाहरति ।
एषोऽरूढस्तोमतः सँस्थातः पृष्ठत इति ।
तद्यत् षड्विँशस्थानम् एवमपर्वविलोप इति ।
उत्तमाभिप्लवावावृत्तौ भवतः३ अनावृत्ताविति ।
अनावृत्ताविति शौचिवृद्धिः ।
न ह्यावृत्तिर्विज्ञायते ।

अथास्या मध्ये सर्वस्तोमो मध्यस्थानो विषुवानिति ।
आवृत्ताविति गौतमः ।
प्रतिष्ठाकामसत्र एतस्मिन् स्थाने व्रतं करिष्यन् भवति ।
नैतदन्यत्र मध्याद्वान्ताद्वा भवतीति ।
यद्वेतदनादिष्टावृत्तिरिति नाभिप्लवस्यावृत्तिः क्व च नादिश्यतेऽर्थ एवावर्तयतीति ।
यद्वेतदमध्ये सर्वस्तोम इति अपर्वविलोपायैतद् भवति ।
पश्यामश्चामध्ये विषुवन्तं यथा त्रयोदशरात्रे सँसत्स्विति ।
संवत्सरसम्मितासु प्रायणीये चतुर्विँशं प्रतिषिध्य त्रिवृदेव कार्यम् इत्याह ।
निष्पन्नचोदितत्वादेतदपूर्वं प्रायणीयं चेति ।
स्तोमविकारमेके ।
तस्यैवाधिकाराच्चतुर्विँशं त्वेव कार्यमिति निष्ठा ।
तथाहि ब्राह्मणम्--ता एताः संवत्सराप्तिमुपकृताः तत्र यदेतान्यहान्येवँ संवत्सरस्य प्रयुक्ततमान्यहानि भविष्यन्तीति ।
तृतीयेऽभिप्लव इषोवृधीयसमन्ते कुर्या३न्न कुर्या३दिति ।
न कुर्यादित्याहुः ।
पृष्ठ्य सान्निपातिके इमे भवतः ।
न चेह पृष्ठ्यो भवतीति ।
कुर्यादित्यपरम् ।
नानापर्वणोरिमे सन्तानार्थे भवतः ।
नानापर्वतरे चैतेऽहर्गणश्चैकाहश्च ।
भूयसा चैवँ सांवत्सरिकाणां द्रव्याणामभिप्रयोगो भवति ।
अथाप्यत्र विश्वजिदभिजित्सन्निपातो भवति ।
एतौ च पृष्ठ्यसदृशाविति ।
आवृत्तेऽभिप्लवे कतमत् सन्तनि कुर्यादिति ।
यणवमित्येके ।
एतदेकाथे दृष्टम् ।

अथाप्येतदेषामावृत्तानामन्ते भवति मध्योद्वायमिदꣳ सत्रमिति ।
अपत्यमित्यपरम् ।
एवं पुरस्ताच्छन्दोमाना द्विष्प्रयुक्तानि भवन्ति ।
सन्तनीत्यपरम् ।
एतदेषामाद्यं भवति ।
असम्प्राप्तेरन्ततो लोपः ।
शाक्वरवर्णमित्यपरम् ।
एतदेषामकृतं भवति ।
अथाप्येवं सम्प्राप्येयं भूयः सांवत्सरिकं द्रव्यमनुगृह्यत इति ३
प्रजापतिकामसत्रमुत्तरम् ।
तत्र नवाहान् करोति न्यूनान् प्रजापतिरिति ।
षडभिप्लवस्य सत्रस्येदꣳ स्थानम् ।
स चाभिप्लवतामनतिचिक्रमिषन्नेतानेव षडहान् संव्यूह्य चतुरो नवाहान् करोति ।
अथ खल्वत्र भागस्तोमान् करोति एतेऽयने दृष्टा इति ।
तेषां यदेवꣳविधः सꣳस्थायोगः एवमुभे रूपे षडहरूपं च ।
अथाप्येवं तावत्यः सꣳस्था यथा षण्णामभिप्लवानामिति ।
उद्धरत्यर्कं यो विधृतिषु दशरात्रे ह्यर्कान् करिष्यन् भवति ।
राथन्तरेणाह्ना त्रिवृतः प्रतिपद्यते ।
बार्हतेन पञ्चदशान् राथन्तरेण सप्तदशान् बार्हतेनैकवि-शान् अव्यवेतान् नवाहान् ।
तत्र व्यत्यासः कुशलेनोपपद्यत इति ।
प्रतिष्ठाकामसत्रमुत्तरम् ।
तदाञ्जनाभ्यञ्जनाभिर्व्याख्यातम् ।
न्यायक्लृप्तमेकषष्टिरात्रात् ।
अथैकषष्टिरात्रꣳ संवत्सरसम्मितास्थानमेव ।
तत्र नवाहमभितः पृष्ठ्यौ करोति ।
एवꣳ सर्वꣳ सांवत्सरिकं द्रव्यमनुगृह्यत इति ४

अथ केनासँ स्तीर्णान्यभिविदधीतेति ।
रात्रसत्रन्यायेनेत्याहुः ।
यथा शतरात्रमिति ।
अपि वा दशरात्रम् ।
व्रतं चान्ते निधाय सांवत्सरिकाणामह्नाँ समविभागः सिध्येत् ।
तथा कल्पं कुर्वीत ।
यथा संवत्सरसम्मितासु ।
अपि वा यत्र भागस्तोमानाँ समविभागः सिध्येत् तथा कल्पं कुर्वीत
यथा सवितुः ककुप्सु ।
ज्योतिष्टोमेन वैषः ऊनस्य पूरयितेति ।
अथ प्रायणीयोदयनीययोरतिरात्रयोरादिशति ।
एकत्र षोडशिनं नैकत्र ।
तत्र कथँ स्यात् षोडशीति ।
यथा विराट् सम्पदँ सम्पत्स्यमानां मन्येत तथा कल्पं कुर्वीत यथा
संवत्सरसम्मितासु ।
अपि वा यत्र भागस्तोमानां संविभागः सिध्येत् ।
द्वादशाहस्य च गवामयनस्य स विराट्सम्पदँ षोडश्युपकृतः ।
अथानुपपद्यमानायां प्रकृतौ निर्णीय यथा मन्येत तथा सँशयेषु
प्रतिपादयेत् ।
तेषां यानि रात्रिसत्रन्यायेन वर्तन्ते षोडशिमन्तौ तत्र यथा द्वादशाहे ।
अथ यत्र रोहप्रत्यवरोहौ सत्रमुपकृतमषोडशिकौ तत्र यथा गवामयने ।
यत्रानुमध्यँ षोडशी दृश्येताषोडशिकौ तत्र ।
यत्रो न दृश्येत षोडशिमन्तौ तत्र सत्रकामस्य ।
अथापि वा चतुष्टोमेष्वषोडशिकौ सर्वस्तोमेषु षोडशिमन्ताविति ५
इत्यष्टमः पटलः

अथातः सांवत्सरिकाणि ।
तेषां यद् गवामयनेन सामेति व्याख्यातम् ।

तद्यदपवदति व्यावृत्त्यर्थं वा तत् ।
अपि वा ब्राह्मणेनैव कारणं वदति ।
तत्रादित्यानामयनमुद्भिद्बलभिदौ मात्रासम्पूरणाय करोति ।
तत्रैक इन्द्रक्रतावुत्सेधनिषेधौ कुर्वन्ति ।
एष औत्तरपाक्षिक इति ।
तत्र निन्दा यत् षट् प्रगाथा भवन्ति अष्टौ प्रागाथिकानीति ।
यथासमाम्नायं त्वेवैवं पक्षयोः समाधिरिति ।
पञ्चदशत्रिवृद्भ्यामुपहिते गोआयुषी ते पञ्चदशत्रिवृद्भ्यां प्राचिक्रमयिषीत् ।
छन्दोमस्तोमं दशरात्रे करोति पाङ्क्ताश्छन्दोमा इति ।
तस्यान्ते चतुर्विँशे सन्निपततः ।
तत्र पञ्चविँशं करोति ।
नानात्वार्थः स उ चतुर्विँश एव भवति ।
चतुर्विँशो ह्येवैष एकाह्नि प्रस्तुत इत्यालोभाद् बृहद्रथन्तरे पृष्ठे ।
अथापि स्तोमज्ञात्रेण ।
अथाप्येवं तावन्तः पृष्ठोपाया यथा गवामयने ।
समूहति बार्हद्रथन्तरपृष्ठ्यात् उद्धरति षोडशिनं चतुर्थात् ।
विराजमन्वपायँ स्वराजोपेयुः ।
स्तोमस्य वा लोभात् ।
अथापि यद्यु हैनमेकविँशमकरिष्यदुपैष्यच्छान्दोमात् ।
यदि छन्दोममैकविँश्यात् ।
न चैष सैकविँशे क्रतावनेकविँशस्तथेह भवतीति ।
अथाप्येवं तावन्तः षोडश्युपाया यथा गवामयने ।
अथाप्येवं पञ्चदशसम्पद् दशरात्रस्य सिध्यति ।
षट्स्तोत्रीयाः पञ्चदशमतिरिच्यन्ते ।
त्रीण्यत्र सन्तनीन्येकप्रस्तावानि तेभ्यः षट् प्रस्तावा लुप्यन्ते ।
एवमेषा पञ्चदशसम्पत् सिध्यतीति ६
दशमस्य चतुस्त्रिँशम् एकेऽग्निष्टोमसाम कुर्वते छन्दोमतायै ।
चतुर्विँशमेके ।

एकाहस्तोमो भवतीति ।
त्रयस्त्रिँशं त्वेव स्यात् ।
क्रियमाणे ह्येवैतस्मिन् पुरा छन्दोमस्तोमम् ।
एतदहर्भवतीति यथा भूयस्येन ।
अथाप्याह--चत्वारश्छन्दोमा इति ।
एष एव सँशय एकस्तोमेषु ।
सर्व एव द्वादशाहो विकृतः स्यादित्येके ।
द्वादशाहे च श्रूयमाणे किमर्थोऽवयवं प्रतीयादिति ।
कृतप्रमाणाः सँशया भवन्तीत्यपरम् ।
ते पश्यामोऽन्यावतिरात्रौ कृत्वाह--अभिजिद् द्वादशाहो विश्वजिद् द्वादशाह इति ।
अथापि नानापदि रात्रेः ससन्धिकायाः स्तोमविकारो विद्यते ।
सा कथँ सँशयेषु प्रतीयेत ।
अथापि महत्सु स्तोमेषु सन्धिस्तोत्रीयान् प्रत्यकल्पयिष्यत् ।
एतेन सर्व एकस्तोमा व्याख्याताः ।
अप्यहीनेषु अथ षोडश्येकविँशस्तोमो वा स्यात् ।
अपि वा ये प्राक्
त्रिणवत्रयस्त्रिँशाभ्यामहस्तोमास्तेष्वन्वियादेकविँशमुत्तमेष्विति ।
तौ खल्विमौ द्वौ दशरात्रौ भवतः ।
उभयत्राह दशमधर्मा मानसे तु विचारयन्ति ।
पूर्वस्मिन्नित्येके ।
एषोऽयुक्स्तोमो विकृतो नानापृष्ठो धर्मीति ।
उत्तरस्मिन्नित्यपरम् ।
एष स्थानस्थः ।
अथापीदं यदनाप्तमेतदन्तेऽभिरूपम् ।
अथाप्येवं व्रतस्य मानस्य चाव्यवायो भवति ।
अथाप्येवं त्रिवृत् पञ्चदशसम्पद् दशरात्रयोः सिध्यति ।
अथापि यत्पूर्वस्मिन्नकरिष्यद् बहुना कृतो मानसमध्यशाययिष्यत् ।

अथापि पूर्वस्माद् दशरात्राद् बह्वपैति तस्यैतस्मिन्ननुग्राह इति ।
२ ३ १ २ ३
अग्न आयूँषि पवसे इति
उत्तरस्य दशरात्रस्य करोति ।
कस्य हेतोरिति ।
शुशुत्सत् सत्रमिदं भवति ।
सैषाग्नेयी पविताभिव्याहारा शुध्यर्थेऽभिरूपा ।
अथाप्याग्नेय्य आङ्गिरसः सैषाङ्गिरसी देवतेति ७
प्रतिष्ठाकामसत्रमुत्तरम् ।
तत्र षाडहिकान्मासभाजो रूढावृत्तान्निदधाति ।
एवँ सिद्धौ रोहप्रत्यवरोहाविति व्याख्यातम् ।
व्रतं विषुवाँस्तत्रोक्तमयनेषु ।
अपि च पृष्ठ्यस्तोमो विहृतः स्यादिति ।
अथाप्युदाहरन्ति ।
यज्ञसमास उत्तरम् ।
तत्रैतानि ह्युक्तानि स्थानानि ।
अतिरात्रः शौनासीर्यो मासो दशरात्रो महाव्रतमिति ।
कर्तव्यानीत्येके ।
क एष सत्रन्याय इति ।
अकर्तव्यानीत्यपरम् ।
एवं पुराणं वेदयन्ते ।
अथाप्यनादिष्टः प्रायणीयो व्यूहेन भवति ।
तत्र यत् पुरस्तादतिरात्रमकरिष्यदलब्धो रोहोऽभविष्यत् ।
अपि च सुत्याँ हविर्यज्ञा व्यवयिष्यन्निति ।
यज्ञसमासत्वाद्धोत्रा समासः ।
हविर्यज्ञप्रक्रमत्वात् अत्सरुकैश्चमसैर्भक्षयन्ति ।
अथ खल्वत्र द्वौ गृहपती सन्निपततः ।
होत्राध्वर्यवेनैकेन सुवृत्तये इव स एष वृत्त्यर्थ एव द्वितीयः ।
स यद् गृहपतिरेतद्ब्रणस्थानमिति ।

स्वर्गकामसत्रमुत्तरम् ।
तत्र संवत्सराभिप्रयोगो भवति ।
एवं यज्ञतपसोरभिवृद्धिरिति ।
तत्रोक्तमयनेषु तेषां यान्येकाहैर्वर्तन्ते गौरीवितानि तानि ।
यानि नानाहोभिः सगौरीवितानि तानि ।
नानाह्नां हि सन्तानार्थं गौरीवितमिति ।
अथ पुरुषस्य नारायणस्यायने विश्वजिदेवोभयोः पक्षसोः स्यादित्येके ।
एवं पक्षसोः समाधिरिति ।
यथासमाम्नायं त्वेवमविलोप इति ।
अथैतेषु दशसु विचारयन्ति ।
कानीमान्यहानि स्युरिति ।
ज्योतिष्टोम इत्येके ।
एषोऽधिकृतः पुरस्ताद् भवति ।
अनापन्नान्येतानि पृष्ठ्यानि ।
ज्योतिष्टोम इत्यपरम् पृष्ठं गृह्यमाणम् गृह्णीयादिति ८
अथैतत् क्षुल्लकतापश्चितमित्याचक्षते ।
चत्वारो दैक्षा मासाश्चत्वार औपसदाश्चत्वारः सौत्याः ।
तस्य कल्पाः ।
गवामेवायनस्य प्रथमोत्तमौ पूर्वस्य पक्षसो मासौ स्यातां तथोत्तरस्य ।
अथैतं महातापश्चितमित्याचक्षते ।
चत्वारो दैक्षा मासाश्चत्वारः सौत्याः ।
तस्य कल्पः ।
गवामेवायनं चतुरुपेयुः ।
अपि वैतस्यैव पक्षस्यभिवृद्धे स्याताम् ।
त्रयोविँशतिरयनमासाः पूर्वे पक्षसि स्युः ।
द्वाविँशतिरुत्तरे ।
अपि वैतान्येव प्रथमानि चत्वारि समस्येत् ।
यथा त्रीणीति संवत्सर इति ।

अपि वा ज्योतिष्टोमायनमेव कुर्वीरन् ।
एतेषां यन्मन्येरन् तत् ।
अपि वा यथा गणसंवत्सराणां तथा कल्पं कुर्वीत ।
अथैतत् शाक्त्यानाँ षट्त्रिँशत् संवत्सरम् ।
तरसपुरोडाशमन्नसंरोधात् ।
यदन्नः पुरुषस्तदन्ना स्याद् देवतेति ।
ते यन्मांसमया वा श्यामाकमया वोमे आपन्ने हविष्ट्वमिति ।
अथैतानि महासत्राणि देवानामेव दीर्घायुषो देवा इति ।
मनुष्याणामपि सिद्धानि स्युरित्यपरम् ।
बहवः संनिविश्य सुनुयुः पुत्राः पौत्राः प्रपौत्रा इति ।
तानि खल्वनतिरात्राण्यविषुवत्कान्यूर्ध्वायनानीमानि भवन्ति ।
तत्र यदतिरात्रं वा विषुवन्तं करिष्यंल्लब्धो रोहोऽभिविष्यत् ।
अथापि न कल्पेनादेशो विज्ञायते नो ब्राह्मणेन ।
अथाप्येवं पुराणं वेदयन्ते ।
अथाप्याह--एकविँशोऽन्ततः स्तोमानां भवति इति ।
शतसंवत्सरेऽनतिरात्रस्यैव सत इति ।
अथैतदग्नेः सहस्रसाव्यं परमां विराजमुपकृतम् ।
सहस्रसंवत्सरेप्सामुपकृतं वा सहस्रसंवत्सरेप्सामेवोपकृतं स्यात् ।
तत्रोक्तमयनेषु तत्रोक्तमयनेषु ९

इति नवमः पटलः

स्वर्गकामसत्रमुत्तरम् ।
तद्यत् सारस्वतमेषा स्वर्गोक्ता भवतीति ।
अथैषाऽग्नये कामायेष्टिः पृष्ठशमनार्थेनैव भवति ।
अथ खल्वाह--तस्यामश्वां च पुरुषीं च धेनुके दद्युः इति ।
केभ्यो दद्युरिति ।
प्रसर्पकेभ्य इत्येके ।
दृश्यते च प्रसर्पकेभ्यो दानम् ।

अथापि व्रात्यस्तोमेष्वनृत्विग्भ्यो ददातीति ।
पृथगेवेतरस्मा इत्यपरम् ।
कर्तृभिः संयुक्ताः क्रतुदक्षिणा भवन्ति ।
तत्रापरिवर्तमाने किमर्थोऽवयवं प्रतीयादिति ।
अरुणायां क्लृप्तयामुदवसानीयाभिरिष्टिभिर्यजेरन्निति गौतमः ।
एवं वदति सँस्थाक्रमं भवति ।
अथाप्येषा लोकोक्ता भवतीति ।
सारस्वत एवोत्तरे कुशलं यत् सन्ततस्तुत्ये ।
त्रिवृत्पञ्चदशमिन्द्राग्नयोरयनम् ।
एताविन्द्राग्नयोर्भक्ती इति यद् गोआयुषी सप्राये च ।
अपि चैन्द्राग्निभ्यामत्याधिस्त्रिवृत् पञ्चदशयोरिति ।
त्रिकद्रुकक्लृप्तमुत्तमस्य ।
एते यदि न दृष्टा इति ।
यदु विश्वजिदभिजिताविन्द्रकुक्षी सप्राये च ।
अपि चार्णवे द्वाभ्यामत्याधिस्त्रिकद्रुकाणामिति १०
अथैतद्दार्षद्वतँ स्वर्गकामायनम् ।
तस्यैते पुरश्चरणे गौपाल्यं चाग्नीन्धनं च ।
दीक्षाभ्यः प्रथममिति गौपाल्यमुपसद्भ्योऽग्नीन्धनम् ।
स यदृत्विजो वाचार्यस्य वैतौ स्थानिनौ गुरू तयोः प्रैषचरणमभिरूपम् ।
तदेव मनुष्येभ्यस्तिरोभवति । इति ।
तत एवारण्यमाविशेत् पुनर्ग्राममाव्रजेदिति ।
स्वर्गं लोकमाक्रमते इत्येके ।
व्यावर्तते ।
श्रेयान् भवतीति वा ।
अथैतत्तौरमिष्टययनं विराट्कामायनम् ।
अपि वा संवत्सरसुत्यां नेदीयस्या मात्रयैप्सीत् ।
किमर्थ उ तदिति ।
ज्यायँ स्यादिति ।

अननुभूतिजं स्यादिति ।
सिद्धिदर्शी वा स्यात् ।
सिध्यति वै खलु संवत्सरसुत्याया इष्ट्ययनेनाप्तिः ।
तत्रापि सुत्या देवता भवन्ति ।
यावदेवमर्थरूपं च ।
अदीक्षितः कृष्णाजिनं प्रतिमुञ्चते ।
नवनीतेनाङ्गान्यभ्यङ्क्ते दीक्षारूपमेतद्भवति ।
व्याख्याता इष्टयः ।
इष्ट्यन्तं वा पश्वन्तं सोमान्तं वा कुर्वीतेति ।
उभयोः पृष्ठशमनरूपमेतद् भवति ११
सर्पसत्रे किमयनँ स्यादिति ।
गवामयनम् ।
स्तोमविकृतमित्येके ।
अनादिष्टान्यहानि व्यूहेन भवन्ति ।
संवत्सर आदिश्यते ।
तत्र किमर्थोऽवयवं प्रतीयादिति ।
अथापि विषुवदादेशेन रोहप्रत्यवरोहौ गवामयनोत्पादावेतौ भवतः ।
अथाप्याह--षण्डकुषण्डावभिगरापगरौ इति ।
व्रतेऽभिगरापगरौ भवतः ।
कौसुरुबिन्दे प्रत्यवरोह इति गौतमः ।
एते कल्पेऽनादिष्टे भवतः ।
यद्वेतदनादेश इति आदिष्टे कल्पे न भवतः ।
यद्वेतद्विषुवदादेशेन रोहप्रत्यवरोहाविति दृश्यते विषुवानेतयोस्तन्त्रयोः ।
अर्हति वातवतोरयने तथा रोहप्रत्यवरोहाविति ।
यद्वेतत् षण्डकुषण्डावभिगरापगरौ इति अन्यत्र सतोरवदिष्यत् ।
अपि चेहोपासकयोः ।
अपि वा वचनादभिगरापगरौ स्याताम् ।
तत्खलु रूढप्रत्यवरूढं ततो विषुवानिति ।

व्याख्यातानि सर्पसामानि ।
विषुवति सर्पसामानि कल्पप्रायाणि ।
तेषां यदेवमानुपूर्व्यं निधनान्येषामादित्यस्यैषामुपकृतानि
तेषामेवानुपूर्व्यम् ।
अथाप्येषामेतद्गणनिधनम् ।
तत् त्रिणिधनानुग्रहाय माध्यन्दिनेऽचिकीर्षीत् ।
आनुपूर्व्यमितरे १२
अथैते गौषूक्ताश्वसूक्ते भ्राजाभ्राजयोः स्थाने सप्राये च ।
अपि वैनयोर्ज्योतिः सप्राये यथा भ्राजाभ्राजयोरिति ।
दशिनँ स्तोमं करोति दँशुकाः सर्पा इति ।
द्वादशं विषुवन्तमित्याधित्सन् ।
अथापि शश्वद् द्वादशौ विषसेचनौ नाम सर्पाणां दन्तौ भवतः ।
तद्रूपं विषुवत्यचिकीर्षीत् ।
प्रजापतिकामसत्रमुत्तरम् ।
तत्र संवत्सराभिप्रयोगा भवन्ति ।
संवत्सरँ हि प्रजाः पशवोऽनुप्रजायन्ते इति हि भवतीति ।
तत्रैतान्येव त्रीणि समस्य निदधाति ।
एवमातृतीयं पृष्ठ्याभिप्लवयोर्दशरात्रस्येति विकार उपपत्स्यत इति ।
तत्रैके गवामयनमन्ततः कुर्वन्ति प्रजापतिकामसत्रत्वात् ।
एतेन वै गावः प्रजातिं भूमानमगच्छन् प्रजायन्ते बहवो भवन्तीति ।
स्तोमतश्चैव गवामयनानाँ रोहो भविष्यतीति ।
अथैतत् प्रजापतेः सहस्रसंवत्सरं परमां विराजमुपकृतम् ।
अपि वा प्रजापतीप्सामेवोपकृतँ स्यात् ।
तत्र खलु त्रिवृतं करोति रथान्तरं च लघुश्चाग्रस्तोमश्चाग्रं प्रजापतिरिति ।
ज्योतिष्टोमं तन्त्रम् ।
आग्निष्टोमीँ सँस्थाँ रथन्तरपृष्ठम् ।
तत्र खलु बृहस्पतिसवं करोति ।
एषोऽग्निष्टोमस्त्रिवृतस्तोमो रथन्तरपृष्ठो ज्योतिष्टोमतन्त्रो भवतीति

न्यायक्लृप्तमुत्तरं न्यायक्लृप्तमुत्तरम्  १३

इति निदानसूत्रे दशमः प्रपाठकः

निदानसूत्रं समाप्तम्